# प्राच्यविद्याशताब्दीयम्

## ( संस्कृतप्रबन्धकाव्यम् )




रमाकान्त शुक्लः

'देववाणी-परिषद्, दिल्ली' ग्रन्थाङ्कः - १४३

# प्राच्यविद्याशताब्दीयम्

## ( संस्कृतप्रबन्धकाव्यम् )

प्रणेता

रमाकान्त शुक्लः




देववाणी-परिषद् , दिल्ली

आर ६, वाणी-विहारः,

नयी दिल्ली-११००५९ ( भारतम् )

**प्राच्यविद्याशताब्दीयम् (संस्कृतप्रबन्धकाव्यम्)**

**लेखकः** : डॉ. रमाकान्त शुक्लः
**प्रकाशकः** : देववाणी-परिषद्, दिल्ली
आर-६, वाणी विहारः,
नयी दिल्ली-११००५९ (भारतम्)

**मुद्रकः** : मयूर प्रिंटर्स एण्ड पब्लिशर्स,
डब्ल्यू एच-२६, प्रथम तल, फेज-१,
मायापुरी इंडस्ट्रियल एरिया, नई दिल्ली-११००६४

**संस्करणम्** : प्रथमम्, (संशोधितं परिवर्धितं च), २०२० ई०
**मूल्यम्** : सार्धसहस्रं रूप्यकाणि (रु० १५००.००)


**ISBN - 978-81-85924-39-7**



Prachyavidyasatabdiyam **(Sanskrit Poetry)**

**Author** : Shukla, Dr. Rama Kant
**Publisher** : Devavani Parishad, Delhi
R-6, Vani Vihar, New Delhi-110059
(India). Phone : 011-28561846
**Printer** : Mayur Printers & Publishers,
WH-26, First Floor, Phase-I, Mayapuri,
I.A., New Delhi-110064
**Edition** : First (Revised), 2020
**Price** : One thousand five hundred only Rs. 1500.00

# विषयानुक्रमणिका


| | | |
|---|---|---|
| १. | लेखक-परिचयः | vi |
| २. | प्रास्ताविकम् (रमाकान्तशुक्लः) | vii |
| ३. | प्राच्यविद्याधिवेशनस्य प्राग्वाचिकम् | ix |
| ४. | प्राच्यविद्याधिवेशनस्य आवरणपृष्ठस्य प्रतिरूपम् | x |
| ५. | समर्पणम् | २ |
| ६. | प्राच्यविद्याशताब्दीयं | (३-२६२) |
| | खण्डः-१ प्राच्यविद्याधिवेशनम् | ३ |
| | चित्राणि | ५३ |
| | खण्डः-२ प्राच्यविद्याशताब्दीयं नागपुराधिवेशनम् | १०९ |
| | चित्राणि | १३७ |
| | खण्डः-३ अध्यक्षीयभाषणानि | १६१ |
| | खण्डः-४ अ.भा. प्राच्यविद्यासम्मेलनस्य पञ्चाशत्तमेऽधिवेशने पठितो लेखः | २५१-२६० |

# काव्यप्रणेता महामहोपाध्यायः रमाकान्तशुक्लः



**जन्मतिथिः** २४-१२-१९४० ई०
**जन्मस्थानम्** खुर्जा (उ०प्र०)
**पिता** (स्व०) श्री ब्रह्मानन्द शुक्लः
**माता** श्रीमती प्रियम्बदा शुक्ला
**शिक्षास्थले** खुर्जास्थश्रीराधाकृष्ण-संस्कृतकालेजः, एन.आर.ई.सी.कालेजश्च।
**शिक्षा** एम.ए. (हिन्दी-संस्कृतयोः) पीएच०डी० (आगरा), साहित्याचार्यः
**राष्ट्रपतिसम्मानप्रमाणपत्रेण पद्मश्री-सम्मानेन चालङ्कृतः संस्कृतविद्वान्।**
**प्रकाशिता ग्रन्थाः** जैनाचार्य रविषेणकृत पद्मपुराण और तुलसीकृत रामचरितमानस (उ०प्र० शासनपुरस्कृतः), उत्तररामचरितप्रियम्वदाव्याख्या (सहलेखनम्)।
**प्रकाशितानि काव्यानि** भाति मे भारतम्, जय भारतभूमे (उ०प्र० संस्कृत-अकादमी-पुरस्कृते काव्ये), भाति मौरीशसम् (काव्यम्), भारतजनताहम् (उ०प्र० संस्कृतसंस्थानस्य कालिदास-सम्मानेन पुरस्कृतं कवितासंकलनम्), सर्वशुक्ला (कवितासंकलनम्) सर्वशुक्लोत्तरा, आशाद्विशती, मम जननी, राजधानी-रचनाः (उप्रसंसं पुरस्कृत), प्राच्यविद्याधिवेशनम्।
**नाट्यकृतयः** पण्डितराजीयम् (उ०प्र० संस्कृत अकादमी-पुरस्कृतं ध्वनि- नाटकम्), अभिशापम् (उ०प्र० संस्कृत अकादमी-पुरस्कृतं ध्वनिनाटकम्), द्वयोरपि मञ्चप्रस्तुतिः नैकधा जाताः । पुरश्चरणकमलम्, नाट्यसप्तकम्, (दिल्लीसंस्कृतअकादम्या अखिलभारतीयमौलिकसाहित्यरचनापुरस्कारेण सम्मानितम्)।
**सम्पादिता ग्रन्थाः** संस्कृतसुधा, संस्कृगद्यगुच्छः, अर्वाचीनसंस्कृत- महाकाव्यविमर्शः (खण्डत्रयम्), अर्वाचीनसंस्कृत-साहित्य-परिचयः (खण्डद्वयम्), अर्वाचीनसंस्कृत-संग्रहः (खण्डत्रयम्), अर्वाचीनसंस्कृतम् (त्रैमासिकपत्रम्) १९७९ तः अद्यावधि (दिल्लीसंस्कृतअकादम्या अखिलभारतीय संस्कृतपत्रकारिता- सम्मानेन सभाजितम्), स्तुतिकुसुमाञ्जलिः। **अनूदितग्रन्थः** - अमीना (उपन्यासः)।
**काव्यपाठः** विदेशेषु मौरीशस-अमेरिका-इटली-यू०के० प्रभृतिषु देशेषु भारतवर्षस्य विविधराज्येषु च समायोजितेषु विविधसमारोहेषु किञ्च आकाशवाणी-दूरदर्शनयोः १९६३ तः अद्यावधि संस्कृतकाव्यपाठः कृतः। आकाशवाण्याः सर्वभाषा-कविसम्मेलने संस्कृतकविरूपेण अनुवादकर्तृकविरूपेण च सहभागिता कृता।
**साम्प्रतिकवृत्तिः** प्रधान-सम्पादकः - अर्वाचीनसंस्कृतम् (त्रैमासिकपत्रम्)
**आवासः** 'रमालयः' आर-६, वाणी विहारः, नयी दिल्ली-११००५९ (भारतम्)
दूरभाषः ०११-२८५६१८४६, ७०४२४३१६०८

# प्रास्ताविकम्

अ.भा. प्राच्यविद्या-सम्मेलनस्य पञ्चाशत्तमाधिवेशनं शताब्दीसमारोहश्च रामटेकस्थ-कविकुलगुरु-कालिदास-संस्कृतविश्वविद्यालयस्य तत्त्वावधाने महतोल्लासेन समामन्यातामा। स्वागत-समितेः संरक्षकस्य कुलगुरोराचार्यश्रीनिवासवरखेडी - महोदयस्य नेतृत्वे स्थानीय - सचिवेनाचार्यपेन्नामधुसूदनेनान्यैश्च सदस्यैः आसमुद्घाटनसमारोहात्समापनसत्रपर्यन्तं सर्वेऽपि शैक्षणिकाः, सांस्कृतिकाश्च कार्यक्रमा अत्यन्तं चारुतया सञ्चालिताः। १०.१.२०२० तमे दिनाङ्के नागपुरे कविवर्यसुरेशभट-सभागृहे भारतस्योपराष्ट्रपतिना माननीयेन श्री एम. वैकैयानायडू महोदयेनाधिवेशनस्योद्घाटनं कृतम्। अतिथीनां भोजनावासव्यवस्था श्लाधनीयासीत्। नाट्यप्रस्तुतिः, महाराष्ट्रीयसंस्कृतिवैभवस्य प्रदर्शनं, संस्कृतकविसम्मेलनं पुरस्कृतिसमर्पणं -सर्वमपि अभिनन्दनीयमवर्तत। शताधिकग्रन्थानां प्रकाशनमभूतपूर्वमनुष्ठानमासीत्। विद्वदभिनन्दनं, ग्रन्थप्रदर्शनी, सांस्कृतिकान्यनुष्ठानानि, शास्त्रार्थसभा, विदुषां विशिष्टानि व्याख्यानानि, शोधपत्रवाचनसत्राणि-सर्वमप्यभिनन्दनार्हमासीत्। समापन-समारोहे मुख्यातिथेः प्रसिद्धसंगणकविज्ञानिनो डॉ. विजयभटकरस्योद्बोधनेन प्राच्यविद्याया आयतेराशाजनकत्वं सिद्धम्। सफलायोजका नूनमभिनन्दनमर्हन्ति। किन्तु अ. भा. प्राच्यविद्यासम्मेलनस्येतिहासे प्रथमोऽवसर आसीद् यदा समापनसत्रे (१२.१.२०२० तमे दिनाङ्के) कार्यसमितेर्निर्वाचनस्य परिणाम उद्घोषयितुं नाशक्यत। न चापि भाविनोऽधिवेशनस्य स्थानमसूच्यत।

नागपुराधिवेशनस्योद्घाटन-समारोहे (१०.१.२०२०तमे दिनाङ्के मुख्यातिथिना भारतस्योपराष्ट्रपतिना माननीयेन श्री एम्. वैंकेयानायडू- महाभागेन शताधिकग्रन्थानां डिजिटल-पद्धत्या एकतन्त्रेण विमोचनमपि कृतम् एकस्य ग्रन्थस्य लोकार्पणमपि कृतम्। प्रकाशितेषु ग्रन्थेष्वेकः **'प्राच्यविद्याधिवेशन'** मित्याख्यो ग्रन्थो मत्प्रणीतोऽप्यासीत् यो हि चित्रैः संवलितो मया चतुर्ष्वनुभागेषु कृतैरध्यक्षीयभाषणैरथ च पञ्चाशत्तमेऽधिवेशने प्रस्तोष्यमाणेन लेखेन युक्त आसीत्। किन्तु स्थानीयसमित्या केवलं 'प्राच्यविद्याधिवेशनस्य' मूलमात्रमेव

प्रकाशितम्। संयोजकानां विवशता काचित् स्यात्। मया ९-१२.१.२०२० तारिकासु नागपुराधिवेशनेऽप्युपस्थितिर्दत्ता १५.१.२०२०तमे दिनांके च **'प्राच्यविद्याशताब्दीयं नागपूराधिवेशनम्'** इति शीर्षकात्मकं विवरणात्मकं पद्यकाव्यं विरचितम्। इदानीं **'प्राच्यविद्याशताब्दीय'** मितिशीर्षकेण ८.१२. २०१९ तारिकायां नागपुरं प्रति प्रेषितं 'प्राच्यविद्याधिवेशनम्' काव्यं चित्रैरथ च भाषणैर्लेखेन च सह प्रकाश्यते यत्र 'प्राच्यविद्याशताब्दीयं नागपूराधि वेशन' मपि संयोज्यते। अस्यां कृतावितिवृत्तनिर्वाहेण साकं काव्यत्वमपि साक्षात्कर्तुं शक्यते। अयं ग्रन्थो मया अ.भा. प्राच्यविद्यासम्मेलनस्य चिरकालं यावन्महासाचिव्यं निर्व्यूढवतां किञ्च तदनन्तरमध्यक्षासनं सुशोभितवताम् आचार्य रामचन्द्र नारायण दाण्डेकर-महाभागनानां स्मृत्यै सश्रद्धं समर्प्यते। अस्य ग्रन्थस्यारम्भे 'प्राच्यविद्याधिवेशनस्य प्राग्वाचिकमपि' संयोज्यते यस्य प्रकाशनं मूलग्रन्थे न प्रकाशितमभवत्। अहं प्राच्यविद्याधिवेशनस्य प्रकाशनार्थं पञ्चाशत्तमाधिवेशनस्य स्थानीयसमितिं प्रति विनम्रतया कृतज्ञतां निवेदयामि। अत्र ग्रन्थे १०.१.२०२०तमे दिनाङ्के प्रकाशितस्य 'प्राच्यविद्याधिवेशनस्य' आवरणपृष्ठमपि संयोज्यते।

ग्रन्थे यानि चित्राणि संयोजतानि तानि कानिचित् फेसबुकतः सञ्चितानि कानिचित् स्वचित्राङ्कनयन्त्रेण गृहीतानि कानिचिच्च परिचितैर्जनैः प्रदत्तानि। एतेषां सर्वेषामप्याभारमङ्गीकरोमि। अक्षरयोजनार्थं श्रीमान् लोकेशकुमारशर्मा साधुवादैः सभाज्यते।

ग्रन्थस्य प्रकाशनार्थं दिल्लीस्थां देववाणी-परिषदं धन्यवादैः सभाजयानि।

विदुषामाश्रवः

रमालयः

आर-६, वाणी-विहारः,

नई दिल्लीः-११००५९

१५.१.२०२०

( रमाकान्त शुक्लः )

# प्राग्वाचिकम्

२.८.२०१९ तमे दिनाङ्के रामटेकस्थकविकुलगुरुकालिदास-संस्कृतविश्वविद्यालये अखिलभारतीय-प्राच्यविद्यासम्मेलनस्य पञ्चाशत्तमाधिवेशन-स्थानीयसमितेः संरक्षकस्य कुलगुरोः श्रीनिवासवरखेडी-महोदयस्य सान्निध्ये समायोजिते उपवेशने केषाञ्चित् लघुग्रन्थानां प्रकाशनमपि निश्चितमभूत्। तस्मिन्नुपवेशने पञ्चाशत्तमाधिवेशनकार्यसमितेः स्थानीयसमितेश्चाधिकांशाः सदस्या उपस्थिता आसन्। तदनु स्थानीयसचिवेन आचार्यश्रीपेन्नामधुसूदनेनाहमपि शोधपरकं लघुग्रन्थं प्रकाशनार्थं दातुमनुरुद्धः। तदाज्ञां शिरसि निदधानोऽहं 'प्राच्यविद्याधिवेशनम्' इतीदं शोधपरकं संस्कृतभाषानिबद्धं पद्यात्मकं पुस्तकं ग्रथितवान्। अत्र मया अ.भा. प्राच्यविद्यासम्मेलनस्य प्रथमाधिवेशनात्पञ्चाशत्तमाधिवेशनपर्यन्तं संक्षिप्तसूचनां प्रदातुं प्रयासो विहितः। चित्राण्यपि संयोजितानि। इण्टरनेटादपि कानिचन चित्राणि गृहीतानि तदर्थं चित्रदातृणां कृते आभारं प्रदर्शयामि। मया उज्जयिन्यां समायोजिते [illegible]ऽधिवेशने सर्वप्रथमं भागो गृहीत आसीत्। तदुद्घाटना-वसरेऽङ्कितेमकं चित्रमपि मत्सकाशे आसीत्। तदप्यत्र संयोज्यते। अस्मिन् विवरणप्रधानपद्यात्मके पुस्तके काव्यचमत्कृतेराशा नैव कार्या। मया विद्वज्जन-नामकीर्तनेन स्वलेखनी पवित्रिता। अत्र जातान् प्रमादान् क्षन्तुमर्हन्ति विद्वज्जनाः।

अहमस्य ग्रन्थस्य प्रकाशनार्थं अ.भा. प्राच्यविद्यासम्मेलनस्य पञ्चाशत्तमाधिवेशनस्य कार्यसमित्याः स्थानीयसमित्याश्च कृते आधमर्ण्यं व्यनज्मि।

**ये प्राच्यविद्याव्यासङ्गावधीरितमनोमलाः।**
**तेषां करारविन्देषु कृतिरेषार्प्यते मया।।**

गीताजयन्ती
मार्गशीर्ष शुक्लः एकादशी २०७६ वि.
८.१२.२०१९ ई.

विदुषामाश्रवः
(रमाकान्तशुक्लः)

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
[illegible]–८०

# प्राच्यविद्याधिवेशनम्

प्रणेता
डॉ. रमाकान्त शुक्लः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

# प्राच्यविद्याशताब्दीयम्

## खण्डः-१ प्राच्यविद्याधिवेशनम्

## खण्डः-२ प्राच्यविद्याशताब्दीयं नागपूराधिवेशनम्

## खण्डः-३ अध्यक्षीयभाषणानि

## खण्डः-४ अ.भा. प्राच्यविद्यासम्मेलनस्य पञ्चाशत्तमेऽधिवेशने पठितो लेखः

प्रणेता/लेखकः
रमाकान्तशुक्लः

# समर्पणम्



**स्व. प्रो. रामचन्द्र नारायण दाण्डेकरः**

(अखिलभारतीयप्राच्यविद्यासम्मेलनस्य, पूर्वोमहासचिवो महाध्यक्षश्च)

**प्राच्यविद्याशताब्दीये वत्सरे रचिता मया।**
**रा.ना. दाण्डेकर-स्मृत्यै कृतिरेषा समर्प्यते॥**

**रमाकान्त शुक्लः**

१५.१.२०२० अखिलभारतीयप्राच्यविद्यासम्मेलनस्य आजीवनसदस्यः

पूर्वोपाध्यक्षश्च

# प्राच्यविद्याधिवेशनम्

–प्रणेता डॉ. रमाकान्त शुक्लः

वन्दे लम्बोदरं विघ्नतमिस्रापहभास्करम्।
शब्दार्थसिद्धिसंदात्रीं ततोऽहं भारतीं भजे॥१॥

ततः साम्बशिवं नत्वा सर्वविद्याजगद्गुरुम्।
गुरून् ध्यात्वा च कुर्वेऽहं प्राच्यविद्याधिवेशनम्॥२॥

ब्रह्मानन्दं गुरुं तातं मातरञ्च प्रियम्वदाम्।
अभिवाद्य मनःसंस्थौ प्रवर्ते पद्यबन्धने॥३॥

त्रिलोक्यां वसुधा श्लाघ्या तस्यां भरतभूः प्रिया।
तस्यां पुण्यपुरी वन्द्या शौर्य-पाण्डित्य-मण्डिता॥४॥

सह्यपर्वतरम्यायां पुण्यपुर्यां नदीद्वयम्।
मूला-मूठेत्यभिख्यातं जनानां जीवनप्रदम्॥५॥

मल्लस्तम्भचणा बालाः शिवराज-कथाप्रियाः।
विद्याभ्यासपरा यत्र गुरुसेवाविधायिनः॥६॥

एवम्भूतैः सरस्वत्याः पुत्रैः संशोधनव्रतैः।
स्थापिताभा[१] सभा प्राच्यविद्या-सम्मेलनाभिधा॥७॥

याखिले भारते तत्तत्स्थानेष्वायोज्य मेलनम्।
विद्याविविधशाखासु प्रकरोत्यनुशीलनम्॥८॥

---

१. स्थापिता अ.भा. सभा प्राच्यविद्या-सम्मेलनाभिधा॥

तस्याः सभायाः प्रथमाधिवेशनं पुणेनगर्यामभवत्सुयोजितम्।
नन्दात्मनन्देन्दु (१९१९) समङ्किते‌ऽब्दके कृस्तीयपञ्चाङ्गपरम्परायुते॥९॥

श्रीरामकृष्णो गोपालो भाण्डारकरवंशजः।
महाध्यक्षो‌ऽभवत्तत्र विपश्चिद्भिः सुपूजितः॥१०॥

दामोदरात्मजः श्रीमान् पाण्डुरंगो गुणे-कुलः।
महासाचिव्यदायित्वं सम्यङ्निर्वाह्य हर्षितः॥११॥

दामोदरात्मजः श्रीमान् रघुनाथो बुधोत्तमः।
कर्मरकर-वंशीयस्तस्मै साह्यं प्रदत्तवान्॥१२॥

विज्ञैः पुण्यपुरी दृष्टा देशान्तरसमागतैः।
पार्वतीमन्दिरं दृष्टं सारसारामशोभितम्॥१३॥

कुचनेत्राङ्कचन्द्राब्दे (१९२२) कलिकाता-पुरोत्तमे।
आयोजितमभूद् भव्यं द्वितीयमधिवेशनम्॥१४॥

आचार्यः सिलवाँ लेवी महाध्यक्षो‌ऽभवत्सुधीः।
डब्ल्यू आर् गोरले तत्र महासाचिव्यमादधात्॥१५॥

विबुधाः शोधपत्राणि प्रेष्ठा उत्साहपूर्वकम्।
अपठन् विदुषां मध्ये पी.जी. टीचिंग-कौंसिले॥१६॥

प्रश्नान् पृष्ट्वा बुधान् संख्यावन्तस्तुष्टिं तदुत्तरैः।
जग्मुस्तथा ननन्दुस्तान् स्वकीयाशीर्भिरानतान्॥१७॥

मद्रपुर्यां ततो जातं तृतीयमधिवेशनम्।
मद्रासाख्ये प्रतिष्ठाढ्ये विश्वविद्यालये शुभे॥१८॥

डॉक्टरगङ्गानाथो झा महाध्यक्षपदे स्थितः।
महनीयैर्विचारैः स्वैः श्रोतॄन् भूर्यभ्यनन्दयत्॥१९॥

साक्कोट्टइ-कृष्णस्वामी अय्यङ्गरकुलोद्भवः।
महासाचिव्यमकरोच्छ्रीदीवान-बहादुरः॥२०॥

अब्धिनेत्राङ्कचन्द्राब्दे (१९२४) मद्रपुर्यधिवेशनम्।
स्मारं स्मारं बुधाः सर्वे पराह्लादं प्रपेदिरे॥२१॥

दर्शनाक्ष्यङ्कचन्द्राब्दे (१९२६) प्रयागेऽभूत्सुयोजितम्।
ए.आय.ओ. सीतिसंस्थायाश्चतुर्थमधिवेशनम्॥२२॥

प्रयागे विश्वविद्यानामालये सुप्रतिष्ठिते।
महाध्यक्षोऽभवन्मोदी जीवनजी जम्शेदजी॥२३॥

यः शम्स्-उल्-उलेमा-सर्-डाक्टरैर्वाड-संज्ञकैः।
विरुदैर्भूषितो रेजे पारसीकनृनायकः॥२४॥

महासाचिव्यमकरोत् डाक्टरोऽमरनाथझाः।
यमाश्रित्य प्रचलिताः प्रयागे रुचिराः कथाः॥२५॥

भोगिनेत्राङ्कचन्द्राब्दे (१९२८) पञ्चमं ह्यधिवेशनम्।
लाहौरे विश्वविद्यानामालयेऽभूत्सुयोजितम्॥२६॥

शास्त्री हरप्रसादोऽभून्महाध्यक्षोऽत्र डाक्टरः।
विद्याविनयसम्पन्नो वाग्ग्मी शोधपरायणः॥२७॥

गङ्गाशोणमिलनभुवि पाटलिपुत्रेऽधिवेशने मतिमान्।
अय्यङ्गर एवासीन्महासचिवपदविभूषयिता॥२८॥

षष्ठं पाटलिपुत्राख्ये पुरेऽभूदधिवेशनम्।
नभोरामांकचन्द्राव्दे (१९३०) बिहारोत्कलमानितम्॥२९॥

'रायबहादुर' विरुदालङ्कृत आसीन्महाध्यक्षः।
श्रीमान् हीरालालो विद्याविनयादिसम्पन्नः॥३०॥

वह्नि-रामाङ्कचन्द्राब्दे (१९३३) वटोदरपुरेऽभवत्।
बडौदाशासनातिथ्ये सप्तमं ह्यधिवेशनम्॥३१॥

तत्र काशीप्रसादोऽभून्महाध्यक्षो बुधोत्तमः।
जैसवालकुलोत्पन्नः इतिहासविशारदः॥३२॥

इहाप्यय्यङ्गरो विद्वान् महासचिवतां व्यधात्।
चतुर्वारमसावेनद्दायित्वं समुदूढवान्॥३३॥

भूतरामाङ्कचन्द्राब्दे (१९३५) ख्रैष्टेऽभूदधिवेशनम्।
अष्टमं श्रीमहीशूर-विश्वविद्यालये श्रुते॥३४॥

डाक्टरस्तत्र सा. कृष्ण-स्वाम्यय्यङ्गरपण्डितः।
प्राच्यविद्यास्तुतिं चक्रे महाध्यक्षासनस्थितः॥३५॥

श्रीपादः कृष्णसूनुर्वै बेल्वल्करकुलोद्भवः।
डाक्टरोपाधिसश्रीको महासचिवतां गतः॥३६॥

ऋषि-रामाङ्क-चन्द्राब्दे (१९३७) त्रावणकोर-शासनम्।
श्रीअनन्तपुरे रम्ये पद्मनाभकृपाविते॥३७॥
समायोजितवद् हृष्टं नवमं ह्यधिवेशनम्।
फ्रेडरिक् विलियम् थामस् महाध्यक्षो बभाविह॥३८॥

(युग्मकम्)

कार्यं सर्वं यथायोग्यं सञ्चाल्य हृदि हर्षितः।
श्री. कृ. बेल्वल्करस्तत्र महासचिवतां गतः॥३९॥

श्रीमाला-श्रीपतिक्षेत्र (तिरुमाला-तिरुपति)-देवस्थानसमाह्वये।
खाब्धिनन्देन्दु (१९४०) वर्षेऽभूद्दशमं ह्यधिवेशनम्॥४०।

महामना मालवीयो विद्वान्मदनमोहनः।
महाध्यक्षोऽभवत्तत्र ख्यातनामा सुदर्शनः॥४१॥

श्री मैसूर हट्टि कृष्णो महासाचिव्यमूढवान्।
शेषेण धार्यते भूमिः पाल्यते विष्णुना तथा॥४२॥

निशानाथाब्धिनन्देन्दु (१९४१) प्रथितेऽब्देऽधिवेशनम्।
एकादशमभूद्धाग्य-नगरे भूतिपूरिते॥४३॥

गुलामो यजदान्यासीन्महाध्यक्षोऽत्र डाक्टरः।
श्रीसुशीलकुमारो डे महासचिवतां गतः॥४४॥

काशीहिन्दू-विश्वविद्यालयेऽभूदद्वादशं शुभम्।
रामाब्धिनन्दचन्द्राब्दे (१९४३) प्राच्यविद्याधिवेशनम्॥४५॥

श्री. कृष्ण बेल्वलकरो महाध्यक्षोऽत्र संबभौ।
डॉक्टरः सु.कु.डे. चासीन्महासचिवपीठभाक्॥४६॥

ततो नागपुरे कन्हानोर्मिमालासुलालिते।
रसाब्ध्यङ्केन्दु (१९४६) वर्षेऽभूत्त्रयोदशमनुत्तम्॥४७॥
विद्वज्जनैः समाकीर्णं प्राच्यविद्याधिवेशनम्।
यत्र प्रौढैस्तथा नव्यै-र्विद्वद्भिश्शोधनं कृतम्॥४८॥

(युग्मकम्)

पाण्डुरङ्गो वामनजः काणे-कुल-समुद्भवः।
महाध्यक्षोऽत्र शुशुभे धर्मशास्त्र-धुरन्धरः॥४९॥

कालिड्डिकुरिची अय्याः नीलकण्ठो बुधोत्तमः।
महासाचिव्यमकरोत् शास्त्री हर्षसमन्वितः॥५०॥

नारङ्गकफलास्वादः काव्यशास्त्ररसैः सह।
विद्वद्भिः सङ्गतैस्तत्र न्यषेवि समुदं मुहुः॥५१॥

वस्वब्धिग्रहचन्द्राब्दे (१९४८) दरभङ्गाह्वये पुरे।
चतुर्दशमभूत्सत्रं श्यामामातृकृपाकुले॥५२॥

दरभङ्गामहाराजस्तत्रातिथ्यप्रदोऽभवत्।
नानादिग्देश-सम्प्राप्त-विद्वद्भ्यो मानपूर्वकम्॥५३॥

मजूमदारोऽत्र रमेशचन्द्रोऽभवन्महाध्यक्षपदप्रतिष्ठः।
ऐतिह्यवेत्ताखिलभूप्रसिद्धः सदैव संशोधनकर्मलग्नः॥५४॥

डाक्टर एम्. निजामुद्दीनाभिधानस्तथा प्रधीः।
महासचिवताञ्चक्रे दरभङ्गाधिवेशने॥५५॥

आलतेकरवंशस्य प्ररोहोऽनन्तसञ्ज्ञकः।
सदाशिवतनूजन्मा डाक्टरोपाधिभूषितः॥५६॥
डाक्टरो रामचन्द्रोऽथो नारायणसुतः सुधीः।
दाण्डेकरवंशस्य दीप्तमुक्ताफलोत्तमः॥५७॥
भूषयामासतुस्तत्र महासचिवपीठकम्।
अन्योन्यं साह्यकर्तारौ सौमनस्यपरिप्लुतौ॥५८॥

(सन्दानितकम्)

आभ्यामेव हि विद्वद्भ्यामग्रेऽप्यङ्गीकृतं पदम्।
इदं, सफलतां याते येन द्वे ह्यधिवेशने॥५९॥

अथ पञ्चदशं मुम्बा-पुर्यभूदधिवेशनम्।
श्री सुशील कुमारो डे महाध्यक्षोऽभवत्सुधीः॥६०॥

मुम्बापुरीविश्वविद्यालय आयोजयत्त्विदम्।
एशियाटिक-सोस्याटी-साहाय्येनाधिवेशनम्॥६१॥

इदं पञ्चदशं सत्रं नन्दाब्ध्यङ्केन्दु-वत्सरे (१९४९)।
आयोजितमभूद्विज्ञैः स्मरणीयं व्यवस्थया॥६२॥

इन्दुभूताङ्कचन्द्राऽब्दे (१९५१) सत्रं लक्ष्मणपुर्यभूत्।
षोडशं यत्र प्राज्ञानां सम्मर्दः सम्यगञ्चितः॥६३॥

शास्त्री का.अ. नीलकण्ठो महाध्यक्षो भवन्निह।
स्वीयसम्बोधने चक्रे प्राच्यविद्याविचारणाम्॥६४॥

वह्निभूतग्रहेन्द्वब्दे (१९५३) सप्तदशाधिवेशनम्।
अहम्दाबादनगरे समायोज्यत सत्प्रियम्॥६५॥

सहयोगं चकारास्मिन् कर्मण्युत्साहशालिनी।
अहम्दाबाद-शिक्षायाः समितिः स्वागतोत्सुका॥६६॥

महाध्यक्षोऽत्र सञ्जातश्चट्टोपाध्यायवंशजः।
श्री सुनीति कुमारः सन् प्राच्यविद्याविशारदः॥६७॥

डाक्टरः श्रीरामचन्द्रनारायण-पदोत्तरः।
दाण्डेकरोऽस्मिन् सत्रेऽभून्महासचिवमानभाक्॥६८॥

अनेन साकमभवद् वेंकटरामराघवः।
कविर्विद्वांस्तथा वेद-विद्या-रक्षण-दक्षिणः॥६९॥

अन्नामलाइ-नगरेऽष्टादशं ह्यधिवेशनम्।
भूतप्राणाङ्कचन्द्राब्दे (१९५५) संयोजितमभूत्ततः॥७०॥

सर्वेपल्लीपूर्वपदो राधाकृष्णाह्वयः सुधीः।
महाध्यक्षोऽभवत्तत्र षड्दर्शन-विशारदः॥७१॥

अन्नामलाइनगरे तमिल्नाडुगते बुधैः।
प्रकृत्याः सुषमा दृष्टा चित्तनेत्रापहारिणी॥७२॥

पर्वता विहगा वन्या जीवाः किञ्च सरीसृपाः।
अभयारण्यगा दृष्टाः चेतोमोदप्रदायकाः॥७३॥

ग्रन्थग्रन्थिं समुद्घाट्य शास्त्राभ्यासे रतैर्बुधैः।
लोकस्य दर्शनं कार्यं, लोकः सर्वगुरुर्यतः॥७४॥

अहम्दाबादनगरेऽन्नामलाइपुरे तथा।
देहल्यामथ साचिव्यं चक्रतुः भुवनेश्वरे॥७५॥
रा.ना. दाण्डेकरः श्रीमाँस्तथा वेङ्कटराघवः।
ययोर्वशंवदा धीरा भारतस्य निवासिनः॥७६॥

(युग्मकम्)

ऋषिभूताङ्कचन्द्राब्दे (१९५७) देहल्यामूनविंशकम्।
श्रीदेहली-विश्वविद्यालयः सत्रं समाह्वयत्॥७७॥

सदाशिवात्मजोऽनन्त आलतेकरवंशजः।
तत्राभवन्महाध्यक्षो प्राच्यविद्यादिवाकरः॥७८॥

श्रीराजेन्द्रप्रसादेनोद्घाटितं ह्यधिवेशनम्।
स्मरणीयमभूत् विद्याचणानां शोधकर्मणाम्।।७९।।

भुवनेश्वरेऽभूद्विंशं सत्रमुत्साहमण्डितम्।
मिराशी वासुदेवः श्रीविष्णुरध्यक्षतां व्यधात्।।८०।।

नन्दभूताङ्कचन्द्राब्दे (१९५९) ओडिशा-राज्यमौत्कलः।
विश्वविद्यालयश्चैवायोजयामासतुर्महम्।।८१।।

इन्दु-तर्काङ्क-चन्द्राब्दे (१९६१) जम्मु-कश्मीर-शासनम्।
अधिश्रीनगरं सत्रमेकविंशं स्वयोजयत्।।८२।।

डाक्टरो वेंकटरामो राघवो विबुधोत्तमः।
महाध्यक्षासनं भेजे विद्वत्कमलभास्करः।।८३।।

गत्वा श्रीनगरं रम्यं भारत-त्रिदशालयम्।
वैदुष्येन समं प्राज्ञैः निसर्गश्रीर्न्यषेव्यत।।८४।।

प्रत्यभिज्ञा-दर्शनादि-शास्त्रालोकनमुग्धधीः।
विद्वांस्तत्र समागत्य धन्यतामभजन्मुहुः।।८५।।

डलझीलं महारम्यं शारदामदिरं तथा।
रक्तं चतुष्पथं दृष्ट्वा विद्वांसो मोदमाप्नुवन्।।८६।।

अक्षौट-कुंकुम-द्राक्षा-सेव-शुष्कफलादिकम्।
मधु माषञ्च संसेव्य दोषज्ञा हर्षमाप्नुवन्।।८७।।

नौगृहेषु शिकाराख्येष्वारूढा ज्ञास्तु केचन।
डल-झीलविहारेण प्रह्लादं परमं ययुः।।८८।।

महासाचिव्यमकरोद् रा.ना. दाण्डेकरो बुधः।
रामारावस्तथा विद्वान् डाक्टर एम. पूर्वकः।।८९।।

प्राण-दर्शन-नन्देन्दु (१९६५) प्रमितेऽब्देऽसमे ततः।
संयोजितं गुवाहाट्यां द्वाविंशमधिवेशनम्।।९०।।

श्रीवासुदेवशरणोऽग्रवालो बिबुधोत्तमः।
महाध्यक्षोऽस्य सत्रस्याभवत् पण्डितमानितः।।९१।।

रा.ना. दाण्डेकरः पृथ्वीनाथपुष्पस्तथा बुधौ।
महासचिवदायित्वमूहतुः कार्यतत्परौ।।९२।।

गुवाहाटीगतैर्विज्ञैः कामाख्यादर्शनं कृतम्।
उमानन्दकृपा लब्धा ब्रह्मपुत्रोऽभिनन्दितः।।९३।।

काजीरङ्गानामकं सुप्रसिद्धं सत्त्वारण्यं लोकितं विज्ञवर्यैः।
खड्गिव्रातो यत्र विस्रम्भचारी दृश्याः सिंहा यत्र दन्तावलाश्च।।९४।।

महिषैः खड्गिभिः सिंहैः गजराजैस्तथा मृगैः।
सेवितं किञ्च विहगैः काजीरंगा व्यलोकि तैः।।९५।।

शास्त्राभ्यासरतैर्विद्भिर्दृश्यो लोकोऽपि निश्चितम्।
एतेनायाति नैपुण्यं काव्यकारणतां गतम्।।९६।।

सर्वस्मिन्नप्यतो विज्ञाः! प्राच्यविद्याधिवेशने।
आयोजकैः प्रावधानं भ्रमणाय विधीयते।।९७।।

रस-दर्शन-नन्देन्दु-प्रथिते (१९६६) खैष्टवत्सरे।
त्रयोविंशमभूत्सत्रं पुरेऽलीगढनामके।।९८।।

अलीगढस्थमुस्लीम-विश्वविद्यालयेन वै।
अयोजिते महासत्रेऽध्यक्षोऽभूज्जैनपण्डितः॥९९।
आदिनाथो नेमिनाथ उपाध्येनामडाक्टरः।
संस्कृतप्राकृतापभ्रंशादिभाषासुपण्डितः॥१००॥
(युग्मकम्)

पुष्प-दाण्डेकरावत्राप्यभूतां महदुत्तरौ।
सचिवौ सदसः सञ्चालन-कर्मणि पण्डितौ॥१०१॥

वाराणस्यामभूत्तीर्थङ्करसंख्यानुगो (२४) महः।
भोगि-शास्त्राङ्क-चन्द्राब्दे (१९६८) विश्वविद्यालयाङ्गणे॥१०२॥

वाराणसेय-पद-पूर्वक-विश्वविद्या-
गेहेऽधिवेशनमिदं सफलत्वमापत्।
प्राच्यप्रतीच्यसुधियां सुविचारजन्या-
लोकप्रभाप्रसरणादवदातभूतम्॥१०३॥

पठित्वा शोधपत्राणि काश्यां विद्वज्जनैः समैः।
गंगास्नानं समाचर्य विश्वनाथस्तुतिः कृता॥१०४॥

कैश्चित् नौकाविहारेण गंगातीरसुशोभिनाम्।
घट्टानां दर्शनं कृत्वा स्वात्मा धन्यः कृतो बुधैः॥१०५॥

प्रालेयाचलतुल्यानां पण्डितानां महौजसाम्।
शास्त्रार्थे गर्जनं श्रुत्वा को नाम न सुखी भवेत्॥१०६॥

आचार्यश्रीविश्वबन्धुर्महाध्यक्षासने स्थितः।
प्राच्यविद्यानुसन्धान-प्रगत्यर्थमभाषत॥१०७॥

आवस्वब्ध्यङ्कचन्द्राब्दात् (१९४८) महासचिवतां गतः।
रसाह्यङ्काब्जपर्यन्तं (१९८६) दाण्डेकरबुधोत्तमः॥१०८॥

वाराणस्यां तेन साकं महासाचिव्यधारकः।
बेल्लिकोत्तो रामचन्द्रः शर्मा डाक्टर आस्थितः॥१०९॥

कलिकाता-पुरे जातं पञ्चविंशाधिवेशनम्।
नन्द-तर्काङ्कचन्द्राब्दे (१९६९) स्फूर्त्युत्साहसमन्वितम्॥११०॥

विश्वविद्यालयस्तत्र जादवपुरलाञ्छनः।
योजयित्वा महासत्रं प्राप्तवान् भूरिशो यशः॥१११॥

श्रीमान् परशुरामो ज्ञः श्रीलक्ष्मण-तनूद्भवः।
वैद्यवंशावतसोऽभून्महाध्यक्षोऽत्र डाक्टरः॥११२॥

उज्जयिन्यां महाकाल-नगर्यामभवत्ततः।
नेत्रर्षिनन्दचन्द्राब्दे (१९७२) षड्विंशमधिवेशनम्॥११३॥

दिनेशचन्द्रसर्कारस्तत्राध्यक्षपदे स्थितः।
स्वभाषणे समस्यानां समाधानानि प्रास्तुवत्॥११४॥

स्थानीयसचिवत्वेन वि. पूर्वो वेंकटाचलः।
उद्घाटने समाप्तौ च पद्यबन्धैरभाषत॥११५॥

श्रीशिवमंगलसुमनः कविवर्यः कुलपतिस्तत्र।
हृदयावर्जकभाषणमकरोत्समवेतविज्ञानाम्॥११६॥

मालवी-माच-गैर्वाणी-नाट्यप्रभृतिमञ्चनम्।
सर्वं हृद्यतया तत्र प्रयुक्तं सत्कलाधरैः॥११७॥

समापनसमारोहे सूचनासीत्प्रसारिता।
रा.ना. दाण्डेकरेणात्र महासचिवपीठतः॥११८॥

विश्वनाथात्मजः श्रीमान् पुरुषोत्तमडाक्टरः।
महाध्यक्षश्चितः प्राज्ञो बापटान्वयजन्मभाक्॥११९॥

कुरुक्षेत्रे सप्तविंशं महासत्रं भविष्यति।
पुरुषार्थर्षि-नन्देन्दौ (१९७४) वर्षे गीता-सुघोषिते॥१२०॥

विक्रमाख्ये मया विश्वविद्यालये
प्रस्तुतं पत्रमेकं समुत्साहिना।
दत्तमाजीवनं किञ्च शुल्कं ततः
प्राच्यविद्यासभायाः सदस्योऽभवम्॥१२१॥

कुरुक्षेत्रे समभवत् सप्तविंशाधिवेशनम्।
पु.वि. बापट आचार्यो महाध्यक्षासनं श्रितः॥१२२॥

रा.ना. दाण्डेकरस्तत्र महासचिवतां गतः।
वि. वेंकटाचलस्तत्र संयुक्तसचिवोऽभवत्॥१२३॥

अपठ्यत मया तत्र पत्रमेकं ससंमुदम्।
रमारञ्जनमुख्यार्याध्यक्ष्ये संस्कृतभाषया॥१२४॥

तत्र गीतारथो दृष्टोऽथो स्थाण्वीश्वरमन्दिरम्।
बह्मपूर्वं सरो दृष्टं स्नानं तत्र समाचरम्॥१२५॥

आद्यारचरणझावर्य्याः सपत्नीका मया सह।
स्नात्वा ब्रह्मसरस्तोये परां मुदमवाप्नुवन्॥१२६॥

पण्डितानां परिषदि तेषां पाण्डित्यपूरितम्।
शास्त्रार्थमाकर्ण्य मनश्चमत्कृतमभून्मम॥१२७॥

सांस्कृतिके समारोहे हरियाणाराज्यविश्रुताः।
स्त्रीभिः पुम्भिश्च या गीतास्ता रागिण्यः श्रुता मया॥१२८॥

श्रीमद्भिर्बापटाचार्यैस्तथा दाण्डेकरैः सह।
मया रामसुरेशेण पाण्डेयेनांकिता छविः॥१२९॥

राजधानीमहापूर्व-विद्यालय-सुषत्रिका।
प्रकाश्य चित्रं तन्मोदं गता स्वान्तः सितासितम्॥१३०॥

विद्वांसो मिलितास्तत्र जाताः परिचिता मया।
वृद्धविद्वत्प्रणामेन पावितो मस्तको मम॥१३१॥

ध्यानेशनारायणचक्रवर्ती घोषस्तथा दीपकनामधेयः।
अन्ये जनाश्चैव जगत्प्रसिद्धं प्रादर्शयन्नाटकमद्वितीयम्॥१३२॥

धारवाडे ततो जातमष्टाविंशाधिवेशनम्।
कर्णाटकविश्वविद्यालयामन्त्रितमुद्भटम्॥१३३॥

कलम्बूर शिवो राममूर्तिस्तत्राभवद् बुधः।
महाध्यक्षो ज्ञानमूर्तिः श्रुतो मूर्तिकलाचणः॥१३४॥

रसर्षिनन्दचन्द्राब्दे (१९७६) धारवाडाधिवेशने।
के. कृष्णमूर्तिराचार्यः स्थानीयसचिवोऽभवत्॥१३५॥

ततः प्रकाशितं ध्वन्यालोकग्रन्थं द्विभागकम्।
क्रीत्वाहमासं मुदितस्तथान्या अपि पुस्तिकाः॥१३६॥

मल्लिकार्जुनमंसूरप्रस्तुतं गानमद्भुतम्।
नयनाभोंसले-नृत्यं तथा कर्णाटकस्तुतिः॥१३७॥

एतत्सर्वमपि श्रोत्र-नेत्र-विश्रामदायकम्।
कार्यक्रमे सांस्कृतिके कलाकारैः प्रदर्शितम्॥१३८॥

तत्राधिवेशने दृष्टो राधावल्लभपण्डितः।
हरिदत्तश्च तन्मित्रं राजलक्ष्मी च पंण्डिता॥१३९॥

ततः पुण्यपुरे जातमूनत्रिंशाधिवेशनम्।
'बोरी'-परिसरे पुण्ये भोग्यश्वाङ्केन्दुवत्सरे (१९७८)॥१४०॥

जानगौण्डा महाभागो महाध्यक्षासने स्थितः।
महासाचिव्यमकरोद् दाण्डेकरमहोदयः॥१४१॥

महाराष्ट्रप्रदेशस्य राज्यपालमहोदयः।
श्रीसादिकअली तत्र मुख्यातिथिरजायत॥१४२॥

श्रीमान् धडफले तत्र सरसं प्रास्तुवद् बुधः।
'कात्यायनी' नाम नाट्यं तथा 'संगीतकं वरम्'॥१४३॥

निर्देष्टृ-प्रस्तुतं वीक्ष्य नाट्यं मण्डपसंस्थितः।
नानादिग्देशसम्प्राप्तो जनो मग्नो रसार्णवे॥१४४॥

श्रीमान् शक्तिधरः शर्माऽस्माकं 'खुर्जा'-सतीर्थकः।
सज्जनसिंहलिश्केन सह तत्र समागतः॥१४५॥

अस्माभिरपि तद्दृष्टमनुष्ठानं रसावहम्।
शुक्लेन शर्मणा लिष्केनारुणोदयजानिना॥१४६॥

भारतस्य युवानोऽथो प्रौढा वृद्धा मनीषिणः।
अष्टादशविभागेषु-शोधपत्राण्यवाचयन्॥१४७॥

भाटे सरोजादिगीतां ग.बा. पलसुलेकृताम्।
गीतिं मन्दाकिनी-नाम्नीं सचेता को हि विस्मरेत्॥१४८॥

साहित्यसङ्गीतकलासाधनातीर्थ-सन्निभे।
श्रीरवीन्द्रयशस्तम्भे श्रुते शान्तिनिकेतने॥१४९॥

वियद्वसुग्रहेन्द्वब्दे (१९८०) कार्तिके मासि पावने।
प्राङ्गणे विश्वभारत्या जातं त्रिंशाधिवेशनम्॥१५०॥

नीहाररञ्जनो राय आचार्योऽध्यक्षतां गतः।
रा.ना. दाण्डेकरश्चासीत् महासचिवपीठगः॥१५१॥

विश्वोत्तरभारत्यां ब्रह्ममित्रस्य सम्मुखे।
साहित्यविषये पत्रं प्रस्तुतं मयका किल॥१५२॥

जी.सी.त्रिपाठिना साकं तत्र मे संस्तवोऽभवत्।
तथा परिचयश्चाभूत् एम्. डुकवित्जसंज्ञया॥१५३॥

सांस्कृतिक्यां च प्रस्तुत्यां दृष्टा 'चाण्डालिका' मया।
रवीन्द्राख्यं च संगीतं बंगभाषागतं श्रुतम्॥१५४॥

रा.ना. दाण्डेकरेणाहं समापन-महोत्सवे।
आहूतः पद्यपाठार्थं किन्त्वासमनुपस्थितः॥१५५॥

स्वकक्षे सुखमस्वाप्सं भुक्त्वा दधि सशर्करम्।
अतो नैव स्थितस्तत्र समापन-महोत्सवे॥१५६॥

**पश्चादहं समाप्ते तु समापन-महोत्सवे।
दाण्डेकर-महाभागान् याथार्थ्यं व्यनिवेदयम्॥१५७॥**

**श्रुत्वा मत्कथितं वृत्तं तेऽट्टहासपुस्सरम्।
कृत्वा वार्तां मया साकं स्वनिवास-स्थलं गताः॥१५८॥**

**ततो बोलपुर-स्थानाद् गृहीत्वा रेलयानकम्।
कलिकातां प्रयातोऽहं द्रष्टुं नगरवैभवम्॥१५९॥**

**कालिकामन्दिरं किञ्च दक्षिणेश्वरमन्दिरम्।
विक्टोरियास्मारकं च तारामण्डलवीक्षणम्॥१६०॥**

**मेट्रोयानं ट्रामयानं मूषकाणां बिलानि च।
रिक्शायानं जलयानं वेलूरमठमेव च॥१६१॥**

**आपणान् विपणीश्चैव पुस्तकालयमेव च।
वटवृक्ष-महोद्यानमन्यद्दृश्यं यथाक्षमम्॥१६२॥**

**वीक्ष्यागतो बोलपुरमग्रिमे दिवसे तथा।
अपरिण्डियेतियानेन प्रस्थितो देहलीं प्रति॥१६३॥**

**मृन्निर्मितानि बालानां गोलकानि तथापरम्।
क्रेतव्यं पेटिकायां हि निधायापत् स्वदेहलीम्॥१६४॥**

**ततो जयपुरे जातमेकत्रिंशाधिवेशनम्।
राजस्थानविश्वविद्यालयामन्त्रणपूर्वकम्॥१६५॥**

**नेत्राहिनन्दचन्द्राब्दे (१९८२) योजितेऽस्मिन् महोत्सवे।
श्रीगौरीनाथशास्त्र्यासीन्महाध्यक्षो महामतिः॥१६६॥**

रा.ना. दाण्डेकरश्चासीन्महासचिवमानभाक्।
कृष्णकान्तचतुर्वेदी सहसाचिव्यमाप्तवान्॥१६७॥

स्वागतं व्याहरत्तत्र श्रीमान् कुलपतिर्मुदा।
अतिथिभ्यः समस्तेभ्यः टी.के.एन. उन्नीथनः॥१६८॥

ओ.पी. मेहरा-नामा राजस्थान-गवर्नरः।
सत्रमुद्घाटयामास स्वीयभाषणपूर्वकम्॥१६९॥

तेनोक्तं प्राच्यविद्याया ज्ञानिभिर्विश्वबन्धुता।
स्थापनीया पालनीया पोषणीया च यत्नतः॥१७०॥

श्रीराजेन्द्रप्रसादस्य वाक्यं तेन समुद्धृतम्।
अतीताध्ययनं भूयाद् भव्यद्भाविहितावहम्॥१७१॥

तेनोक्तं यत्समाजस्य मनोवृत्तिसुधारणे।
कलाज्ञानविचारज्ञा महतीं भूमिकां दधुः॥१७२॥

रम्ये जयपुरीयेऽस्मिन्नधिवेशन एकतः।
ज्ञान-विज्ञान-पूर्णानि शोधपत्राणि पण्डितैः॥१७३॥
पठितान्यन्यतश्चान्यैः कलाकारैः सुशिक्षितैः।
दृश्यश्रव्यानुयायिन्यो हृद्याः प्रस्तुतयः कृताः॥१७४॥
(युग्मकम्)

कालिदासकृतं काव्यम् ऋतुसंहारनामकम्।
चन्द्रशेखर-निर्देशे प्रयुक्तं गीतनाट्यवत्॥१७५॥

गिरीशकरनाडस्य 'ययाती' त्यतिविश्रुतम्।
नाटकमपि प्रादर्शि शिक्षाभ्यासपरैर्नटैः॥१७६॥

'धरती धोरारी' त्येषा राजस्थानीयगायकैः।
प्रस्तुतिः श्लाघिता जाता दर्शकैः सर्वकैरपि॥१७७॥

अध्यक्षेण स्वयं तत्र गौरीनाथेन शास्त्रिणा।
बालपात्रमयं नाट्यमभिज्ञानं प्रदर्शितम्॥१७८॥

दाण्डेकरानुमत्याहं समापन-महोत्सवे।
प्राच्यविद्यापराँच्छ्लोकान् श्रावयित्वा मुदं गतः॥१७९॥

ते श्लोका अङ्किता दैनन्दिनीपृष्ठे मया द्रुतम्।
तस्मिन्नेव दिने श्रोतृवृन्दरञ्जनकारिणः॥१८०॥

ते श्लोका अत्र दीयन्ते विद्वज्जनमुदे मया।
प्रमादान् क्षन्तुमर्हन्ति जातानत्र दयालवः॥१८१॥

"श्रीभाण्डारकरेण लेविसिलवाँ-काणे-मिराश्ययय्यरैः
गंगानाथबुधादिनाथशिवरामैरर्चिता सादरम्।
राधाकृष्ण-दिनेशचन्द्रविनुता श्रीकण्ठमोदीडिता
गौरीनाथयुता जयत्यविरतं श्रीप्राच्यविद्या शुभा॥१८२॥

पुण्यपूः कालिकाता तथा देहली
मुम्बई मद्रदेशस्तथा कालिका।
पूजयामासुरन्या नगर्यश्च यां
प्राच्यविद्यां शुभां नौमि तां सादरम्॥१८३॥

वासुदेवार्चिता नीलकण्ठार्चिता
रामचन्द्रार्चिता वेंकटाराधिता।
विश्वबन्धुत्वमुद्घोषयन्ती च या
प्राच्यविद्यां शुभां नौमि तां सादरम्॥१८४॥

यत्र विश्वं भवत्येकनीडं सतां
यत्र सत्यं शिवं सुन्दरं राजते।
यत्र वैदुष्यपुञ्जः समृद्धिं गतः
प्राच्यविद्यां शुभां नौमि तां सादरम्॥१८५॥

वेदभाभासिता सत्कलालासिता
ज्ञानविज्ञानसाहित्यचर्चायुता।
या च वागर्थसंशोधनैर्वर्द्धिता
प्राच्यविद्यां शुभां नौमि तां सादरम्॥१८६॥

संस्कृतं प्राकृतं तामिलं तेलुगुं
कन्नडं कैरलीं बांगलामांगलाम्।
वाचमन्यां च तां तां ब्रुवाणा च या
प्राच्यविद्यां शुभां नौमि तां सादरम्॥१८७॥

या च प्रेमामृतेनास्ति सिक्ता भृशं
या च शीलाम्बुधेर्वीचिरुल्लासिनी।
जंगमं ज्ञानतीर्थं च या कीर्त्यते
प्राच्यविद्यां शुभां नौमि तां सादरम्॥१८८॥"

सहस्रं द्विशतं चैव विद्वांसोऽत्र समागताः।
अक्टूबरमासस्यैकत्रिंशेऽह्नि गृहं गताः॥१८९॥

ममाग्रजः कृष्णकान्तशुक्लो डॉक्टरलाञ्छनः।
बसयानेन सम्प्राप्तो देहलीं मयका सह॥१९०॥

कञ्चित्कालं यापयित्वा देहल्यां स पुनर्गतः।
बरेलीनगरं यत्र वासस्तस्य कुटुम्बिनः॥१९१॥

**प्राणसिद्धिग्रहेन्द्वब्दे (१९८५) कर्णावत्यामभूत्ततः।**
**गुजरातविद्यापीठे द्वात्रिंशमधिवेशनम्॥१९२॥**

**घाटगेवंशसम्भूतोऽमृतः श्रीमाधवात्मजः।**
**अभाषत महाध्यक्षासनमास्थाय पण्डितः॥१९३॥**

**निर्वाचने मया तत्र सम्प्राप्तो विजयस्तथा।**
**प्रतिभागिनामहं स्नहेपात्रमासं सुभाग्यतः॥१९४॥**

**तत्रापि पठितं पत्रं मयैकं शोधसाधितम्।**
**प्रश्ना उत्तरिता सर्वे ये पृष्टाः श्रोतृभिर्मुदा॥१९५॥**

**षडशीत्युत्तरैकोनविंशे (१९८६) खैष्टेऽथ वत्सरे।**
**एशियाटिक-सोस्याट्या कलिकातामहापुरे॥१९६॥**

**सौल्टलेक-महाक्षेत्रे त्रयस्त्रिंशाधिवेशनम्।**
**योजितं परमप्रीत्या स्वीयसाधनशक्तितः॥१९७॥**

**'साल्ट लेके' समारम्भे रमारंजन-पण्डितः।**
**स्वागतं व्याहरज्ज्ञेभ्यो धीरगम्भीरया गिरा॥१९८॥**

**बंगस्य मुख्यमन्त्री श्री ज्योतिर्वसुमहाशयः।**
**उद्घाटनं समज्यायाः कृतवान्निजभाषणैः॥१९९॥**

**साल्टलेक्-स्टेडियम्मध्ये कविसम्मेलने श्रुताः।**
**सभ्यैः कवीनां रचना नानाभावसमन्विताः॥२००॥**

**द्राविडभाषाविद्वान् वादासेरी इयेमपेरुमलः।**
**आसीत् सुब्रह्मण्यम् कलिकातायां महाध्यक्षः॥२०१॥**

कविसम्मलेनं कर्तुं कवयो मामवीवदन्।
साल्टलेके कृतं तच्च मया लोकानुशासनात्॥२०२॥

दीपकोत्तरघोषेण श्रीरवीन्द्रस्य गीतयः।
अनूद्य संस्कृते गीता विद्वन्मानसमोददाः॥२०३॥

अनेकैः श्रावितं स्वीयं काव्यं लिखितपाठकैः।
अपश्यन्नैव सभ्यान्ये लेखमात्रावलोकिनः॥२०४॥

सहसा विद्युतो लोपादन्धकारोऽभवद्घनः।
तदा कोऽपि न सन्नद्धः प्रस्तोतुं कवितां निजाम्॥२०५॥

तदान्धतमसो राज्ये कण्ठस्थं श्रावितं मया।
'भाति मे भारतं' गीतं होरार्धसमयावधौ॥२०६॥

सभागारे कृतं कैश्चिल्लघुटार्चप्रदर्शनम्।
यत्प्रकाशकणा आसन् ध्वान्ते खद्योतका इव॥२०७॥

मत्काव्यपाठवेलायां सहसा विद्युदागता।
मया दृष्टा रसे मग्ना-स्तत्रासीनाः सचेतसः॥२०८॥

पुनः सञ्चालितं जातं कविसम्मेलनं द्रुतम्।
पठिता यत्र रचना अनेकैः कविपुंगवैः॥२०९॥

रा.ना. दाण्डेकरेणात्र महासचिवता कृता।
पृथ्वीनाथेन पुष्पेण तत्साह्यं प्रतिपादितम्॥२१०॥

ममाग्रजः कृष्णकान्तः शुक्ल आचार्य-डाक्टरः।
उमाकान्तः सभार्यश्च कलिकातां समागतौ॥२११॥

नन्दवस्वङ्कचन्द्राब्दे (१९८९) विशाखापत्तने पुरे।
पण्डितैर्मण्डितं जातं चतुस्त्रिंशाधिवेशनम्॥२१२॥

आन्ध्रोत्तरे विश्वविद्यालये संयोजितो महः।
स्मरणीयोऽभवत्पुंसां सज्जातिथ्यप्रकर्षवान्॥२१३॥

विशाखापत्तने श्रीमान् रा.ना. दाण्डेकरः सुधीः।
महाध्यक्षासने स्थित्वा सदःशोभामवर्धयत्॥२१४॥

शिवरामदत्तात्रेयो जोशीवंशसमुद्भवः।
महासचिवतां यातः विद्वद्वर्धापितोऽभवत्॥२१५॥

महासचिववक्तव्ये जोशी पद्यमये बुधः।
महासचिव-पूर्वेभ्यो नम उक्तिं समार्पयत्॥२१६॥

प्राकृतस्य तथा जैन-विद्याया अनुभागके।
मया निर्व्यूढमाध्यक्ष्यं विद्वन्मानपुरस्सरम्॥२१७॥

पण्डितानां सभा यत्र योजितासीन्महागृहे।
तत्राध्यक्षानुमत्यैव योजितं कविमेलनम्॥२१८॥

सूर्यनारायणः पेरिश्चकारोद्घाटनं बुधः।
कविसम्मेलनस्यास्य स्वीयैराशंसनैः शुभैः॥२१९॥

तस्य सान्निध्य एवासीत् चालितं कविमेलनम्।
त्रिघण्टाकालपर्यन्तं श्रोतृवृन्दसुखप्रदम्॥२२०॥

तत्राभिराजराजेन्द्रमिश्रादिककविकोकिलैः।
यथेच्छं कूजितं येन वसन्तस्यागमोऽभवत्॥२२१॥

कृष्णनारायणो राजदेवमिश्रोऽथ भास्करः।
श्री कामताप्रसादः श्री शर्मौगेटिपरीक्षितः॥२२२॥

प्रतापवन्द्योपाध्यायो जयश्रीर्बङ्गराज्यजा।
कृपारामादयस्तत्र प्रास्तुवन् कविता निजाः॥२२३॥

विशाखापत्तने सत्र-समापनमहोत्सवे।
'भाति मे भारतं' काव्यं श्रावितं सस्वरं मया॥२२४॥

तच्छ्रुत्वा मोदमापन्नाः सदस्याः सकलास्तदा।
केचिच्चित्रांकने लग्ना विदेशागतसूरयः॥२२५॥

रमारञ्जनमुख्यार्यो गाढं मां परिषष्वजे।
दाण्डेकरमहाभागोऽपि परां मुदमाप्तवान्॥२२६॥

विशाखापत्तने दृष्टा समुद्रतटमागतैः।
'पनडुब्बी' ति विख्याता बृहन्नौका, विदां गणैः॥२२७॥

स्वातन्त्र्ययुद्धयज्ञस्य होतुरादिनिवासिनः।
प्रतिमां च विलोक्यासन् जनाः श्रद्धासुपूरिताः॥२२८॥

महोदधेस्तरंगाणां गर्जनं धावनं तथा।
श्रुत्वा दृष्ट्वा च सञ्जाताः बुधा विस्मितमानसाः॥२२९॥

श्रीकाङ्गडीगुरोर्वंश-विश्वविद्यालये ततः।
खाङ्कनन्देन्दु (१९९०) वर्षेऽभूत् पञ्चत्रिंशाधिवेशनम्॥२३०॥

गङ्गातरङ्गालिपूते हरिद्वारे सुयोजिते।
अस्मिन् सत्रे महाध्यक्षो रमारञ्जन आययौ॥२३१॥

**वाग्मी विद्वान् मुखर्जी श्री रमारञ्जन ऊचिवान्।**
**'सन्त्यद्य समकालीनाः उल्लेख्याः कवयो मया'॥२३२॥**

**मादृशानामनेकेषां नामान्युक्तानि तेन वै।**
**संस्कृतस्य प्रगत्यर्थं नूत्ना यत्नाश्च कांक्षिताः॥२३३॥**

**राजारमन्नविज्ञानी समुद्घाटनभाषणम्।**
**कृत्वा प्रशंसां विज्ञानां प्राप्तवान् तुष्टिदायिनीम्॥२३४॥**

**रात्रौ मया तत्र गरीबदास-विद्यालये देवगिरः कवीनाम्।**
**सम्मेलनं योजयितुं प्रयासः कृतस्तथापं महतां प्रशंसाम्॥१३५॥**

**संस्कृतकविसम्मेलन-सञ्चालक आसमहमेव।**
**हरिनारायणदीक्षित आसीदध्यक्षतां गमितः॥२३६॥**

**प्रयागतः सूरिमणिर्जनार्दन-प्रसादपाण्डेयमणिर्युवा कविः।**
**अगायतालम्ब्य मनुष्यचेतनां गीतिं स्वकीयव्यथया परिप्लुताम्॥२३७॥**

**तत्राभिराजेन मनोपहारिणा**
**गीतेन सर्वा हि सभा विमोहिता।**
**'न मे प्रिये रोचत एव जीवनं**
**न वा जगच्चास्ति प्रियं त्वया विना'॥२३८॥**

**विद्वरैर्हरिद्वारं गतैः पञ्चपुरी-गतम्।**
**रामणीयकमाहात्म्यमक्षिलक्ष्यीकृतं मुदा॥२३९॥**

**ब्रह्मकुण्डे कृतं स्नानं भीमगोडावलोकिता।**
**गत्वा कनखलेऽकारि श्रीदक्षेश्वरदर्शनम्॥२४०॥**

छतरीमन्दिरे केचित् संस्थितं कृष्णविग्रहम्।
सम्पूज्य राधिकायुक्तं मनःशान्तिमवाप्नुवन्॥२४१॥

दर्शनं मनसादेव्याश्चण्डीदेव्याश्च पावनम्।
कृत्वावलोकितं पुण्यं भारतमातृमन्दिरम्॥२४२॥

हरद्वारे ब्रह्मकुण्डे गंगानीराजनं बुधाः।
दृष्ट्वा हि धन्यतामापुः पुनर्दर्शनकांक्षिणः॥२४३॥

केचिद्गत्वा हृषीकेशं सेतुं श्रीलक्ष्मणाभिधम्।
दृष्ट्वा प्रमोदमायाताः श्रद्धावन्तस्तथास्तिकाः॥२४४॥

शिवरामदत्तात्रेयजोश्यधिवेशनस्य समापने।
उदघोषयत्कवठेवकरोऽ स्माकं महाध्यक्षो नवः॥२४५॥

श्रेण्यसंस्कृतसंज्ञस्यानुभागस्याभवं चितः।
अध्यक्षोऽहं हरिद्वारे सर्वसम्मतनिर्णयात्॥२४६॥

अध्यक्षभाषणं कर्तुं पुण्यपुर्यधिवेशने।
मया सज्जा विधेयासीदग्रिमे वत्सरद्वये॥२४७॥

समापनोत्सवे जाता प्रस्तुता कविता मणेः।
ततः स्वनगरं याता ज्ञाः स्मरन्तोऽधिवेशनम्॥२४८॥

रामाङ्कनन्देन्द्वब्दके (१९९३) श्रीपुण्यपुर्यां सूरयः।
अधिवेशने षट्त्रिंशके मिलिता गवेषणकारिणः॥२४९॥

आसीन्महाध्यक्षवरः प्रभाकरो नारायणः श्रीकवठेकरान्वयः।
इङ्गाल्सडेनीयल एचएचो मुख्यातिथिर्बोर्यधिवेशने बभौ॥२५०॥

**श्रेण्यसंस्कृतपरेऽनुभागकेऽध्यक्षतां कृतवतः प्रसन्नता।**
**वर्धिता मम च पत्रवाचकास्तोषमीयुरथ शोधसाधकाः॥२५१॥**

**श्रेण्यसंस्कृतसंज्ञस्यानुभागस्याभवन् बुधाः।**
**अध्यक्षास्तेषु केषाञ्चिन्नामान्यत्र लिखाम्यम्॥२५२॥**

**महामहोपाध्यायः श्री कुप्पूस्वामी विदां वरः।**
**महामहोपाध्यायः श्री प्रसादो हरपूर्वकः॥२५३॥**

**महामहोपाध्यायो झा गंगानाथो बुधोत्तमः।**
**वनमाली चक्रवर्ती पण्डित ए.सि. वुल्नरः॥२५४॥**

**एस.के.डे.एफ.डब्ल्यू. कुन्हन्राजादिपण्डिताः।**
**हरिचन्द्रः शास्त्रिवर्यः पी.वी. काणे बुधोत्तमः॥२५५॥**

**के.ए. पदोत्तरः श्रीमान् सुब्रह्मण्यं तथाय्यरः।**
**श्रीमान् शिवप्रसादश्च भट्टाचार्यो विदुत्तमः॥२५६॥**

**वी. राघवन् तथा के.के. हण्डीकः सूरिपुंगवः।**
**श्री एस.पी. चतुर्वेदी जी.वी. देवस्थली तथा॥२५७॥**

**चक्रवर्ती तथा चिन्ताहरणो वदतां वरः।**
**आर.सी. पारिखश्चैव आर.डी. करमर्करः॥२५८॥**

**सी.बी. गुप्तस्तथा विद्वान् वेंकटाचलसञ्ज्ञकः।**
**पृथ्वीनाथपुष्पनामा कविपण्डितलेखकः॥२५९॥**

**रामचन्द्रद्विवेदी च शास्त्री सत्यव्रतस्तथा।**
**ब्रह्ममित्रस्तथावस्थी श्रीराधावल्लभस्तथा॥२६०॥**

आचार्यो राजदेवश्च मिश्रवंशसमुद्भवः।
मिश्रोऽभिराजराजेन्द्रो देवनारायणश्च झाः॥२६१॥

सुषमा च कुलश्रेष्ठा हरिदत्तः प्रयागतः।
श्रीब्रजेशकुमारश्च शुक्लवंशसमुद्भवः॥२६२॥

रमारञ्जनमुख्यार्यो वंगपण्डितयूथपः।
पाण्डेयोऽमरनाथश्च तथान्ये कविसत्तमाः॥२६३॥

अस्मिन्नेवानुभागेऽहमध्यक्षीयाभिभाषणम्।
विद्वज्जनानां पुरतः कृतवान् पुण्यपत्तने॥२६४॥

आसन्नावण्टिता विज्ञा ममाध्यक्ष्ये शताधिकाः।
पश्चाद् भागद्वये तेषां पत्रपाठक्रियाभवत्॥२६५॥

मिश्रो राजेन्द्रोऽभिराजो मनस्वी
यं सम्पाद्याभूत्प्रसन्नो नितान्तम्।
तं ग्रन्थं 'श्रीदेववाणी-सुवासं'
रा.ना. दाण्डेकार उद्घाट्य हृष्टः॥२६६॥

पञ्चभागात्मके ह्यस्मिन् ग्रन्थे मान्यमनीषिणाम्।
लेखाः प्रकाशिता आसन्नध्यर्वाचीनसंस्कृतम्॥२६७॥

दाण्डेकरवक्तव्यानन्तरं मिश्र-चालिते।
कवयो रचनाः स्वीयाः कविसम्मेलनेऽपठन्॥२६८॥

'अभिराजो' राजेन्द्रो मिश्रकुलस्यास्ति यो गरिमा।
स्वीयैः संस्कृतगीतैः रञ्जितवान् श्रोतृसङ्घातम्॥२६९॥

**श्रीमान् मण्डनमिश्रोऽथो कवठेकरपण्डितः।**
**आद्याचरण आचार्यः संख्यावान् वेंकटाचलः॥२७०॥**

**जयमन्तमिश्र-पुष्पादीक्षिताशोकशास्त्रिणः।**
**जोश्यादिविबुधास्तत्राभाषन्त ज्ञाभिनन्दिताः॥२७१॥**

**रात्रौ सांस्कृतिकं कार्यक्रमं दृष्ट्वा सभागृहे।**
**नानादेशसमायाता विद्वांसो हर्षमाप्नुवन्॥२७२॥**

**रोहिताक्षपुरे जातं सप्तत्रिंशाधिवेशनम्।**
**महर्षिश्रीदयानन्द-विश्वविद्यालये श्रुते॥२७३॥**

**अब्ध्यङ्कनन्दचन्द्राब्दे (१९९४) योजितेऽस्मिन् महोत्सवे।**
**के. कृष्णमूर्तिराचार्यो महाध्यक्षश्चितः पुरा॥२७४॥**

**किन्त्वस्वास्थ्याद्विदस्तस्यानुपस्थित्यामवाचयत्।**
**रामकर्ण उपाध्यक्षो महाध्यक्षस्य भाषणम्॥२७५॥**

**भारद्वाजो हंसराजो मुख्यातिथिरभूदिह।**
**यजनोत्तरवीरश्च स्थानीयसचिवोऽभवत्॥२७६॥**

**तत्र श्रीरङ्गनाथेन संस्तवो मेऽभवद्विदा।**
**अर्वाचीनकृतीनां यः प्रथितोऽस्ति विचारकः॥२७७॥**

**किन्तु तस्मिन्दिने ज्ञानी जैलसिंहो दिवं गतः।**
**सांस्कृतिकानुष्ठानानि निरस्तान्यभवंस्ततः॥२७८॥**

**कवीनां रचनानां तु पाठ आसीत् सुयोजितः।**
**शिक्षासम्बन्ध्यनुष्ठानमयमासीद्यतो मतः॥२७९॥**

मया सञ्चालिते रात्रावस्मिन् कार्यक्रमे युवा।
लालाशंकर आसीन्मे गयावालः सहायकः॥२८०॥

श्रीनारङ्गः सत्यपालो दिल्लीं मां तत आनयत्।
स्वीयेन कारयानेनापीरागढि च कोविदः॥२८१॥

रोहिताक्षपुरे सर्वैर्भिन्नस्थानसमागतैः।
दधिदुग्धमयाहाराः प्रीत्या संसेविता बुधैः॥२८२॥

सर्वे गुरुकुलं दृष्ट्वा झज्झरस्थं मनोहरम्।
विद्वांसः शोधकर्तारः परां मुदमवाप्नुवन्॥२८३॥

छात्राणां तत्र तेऽपश्यन् रज्जुरोहणकौशलम्।
ओमानन्दयतेः किञ्च संग्रहालय-वैभवम्॥२८४॥

ऋषिग्रहाङ्कचन्द्राब्दे (१९९७) कलिकातापुरे पुनः।
श्रीजादवपुराख्येन विश्वविद्यालयेन वै॥२८५॥

योजिते प्राच्यविद्याया अष्टात्रिंशाधिवेशने।
जयमन्तमिश्र आचार्यो महाध्यक्षोऽभवत् सुधीः॥२८६॥

शि.द. जोशिमहाभागो महासचिवतां व्यधात्।
नवीनसंस्कृताध्यक्षः श्रीरामकरणोऽभवत्॥२८७॥

श्रीसीतानाथ आचार्यः सत्रसञ्चालकोऽभवत्।
स्थितोऽहमपि तत्रैव शृण्वन् पत्राणि धीमताम्॥२८८॥

कवीनां काव्यपाठार्थं प्रस्तावो मयका कृतः।
अध्यक्षेण प्रसन्नेनानुपदं स्वीकृतो हि सः॥२८९॥

मयेदमपि तत्रोक्तं पत्रं स्याद्रचनास्तु वा।
सर्वेभ्योऽपि प्रदीयेत प्रमाणोत्तरपत्रकम्॥२९०॥

अर्वाचीनं यच्च साहित्यमास्ते तत्राप्यास्ते वैभवं संस्कृतस्य।
प्राच्यं किञ्चार्वाक्तनं मेलयित्वा विद्वद्वृन्दैः पाठनीयं बटून् वै॥२९१॥

तेन ज्ञेयं कीदृशं नव्यमास्ते कीदृक् चास्तेऽस्मत्पुराणं हि काव्यम्।
ग्राह्यो विज्ञैरुत्तमांशो द्वयोश्च सामञ्जस्यान्वेषणं तत्र कार्यम्॥२९२॥

नवसंस्कृतसाहित्यानुभागाध्यक्षताकृते।
चितोऽहं सर्वसम्मत्यैवागामिन्यधिवेशने॥२९३॥

ततो बड़ौदानगरे प्राच्यसंस्थानपक्षतः।
वस्वङ्कग्रहचन्द्राब्दे (१९९८) ऽष्टात्रिंशमधिवेशनम्॥२९४॥
श्रीमत्प्रभुदयालाग्निहोत्राध्यक्ष्ये सुयोजितम्।
नानावटी च राजेन्द्रः स्थानीयसचिवोऽभवत्॥२९५॥

(युग्मकम्)

सन्ध्या सांस्कृतिकी रम्या किन्तु तत्रातिवृष्टितः।
स्थगितासीदतस्तत्र नाभवत्सरसा सभा॥२९६॥

किन्तु तत्र ममाध्यक्ष्यानुभागे कवयो मुदा।
अपठन् नूतनाः स्वीयाः रचना भारतीसुताः॥२९७॥

गुरुवन्दनसङ्गीतमरुणोदयजानिना।
प्रस्तुतं यत्समाकर्ण्य सभ्या आनन्दमाप्नुवन्॥२९८॥

तत्र संस्कृतसेवायाः समितेः पक्षतो बुधः।
गौतमो वाडिलालः श्री पटेलः सद्भ्य आर्पयत्॥२९९॥

ग्रन्थानायोजयत् किञ्च पुस्तकानां प्रदर्शनीम्।
तत्र संस्कृतविद्याया आलये सुप्रतिष्ठिते॥३००॥

(युग्मकम्)

नभःखाकाशनेत्राब्दे (२०००) चेन्नई-नगरेऽभवत्।
संस्कृताकादमी-हूतं चत्वारिंशाधिवेशनम्॥३०१॥

तत्र विद्यानिवासाख्यो मिश्रः पण्डित-मण्डनम्।
महाध्यक्षत्वमापन्नो हिन्दी-लेखक-सत्तमः॥३०२॥

सरोजा श्रीमती तत्र 'भाटे'-कुल-विभूषणम्।
शब्दशास्त्राटेवीसिंह महाशचिवतां व्यधात्॥३०३॥

स्थानीयसचिवा के.ई. रमाबाई बुधोत्तमा।
सत्रं सञ्चालयामासातिथ्यकृत्यसमाकुला॥३०४॥

ततो जगन्नाथकृपासनाथा
पुरीतिसंज्ञा नगरी पवित्रा।
चन्द्राब्धिसंख्यं (४१) किल प्राच्यविद्या-
धिवेशनं योजयति स्म हृष्टा॥३०५॥

श्रीविहारे जगन्नाथ सं.वि. विद्यालयाङ्गणे।
नेत्राकाशनभोनेत्र (२००२)-वर्षेऽभूद्विदुषां महः॥३०६॥

विद्यानिवासमिश्रोऽभून्महाध्यक्षोऽत्र पण्डितः।
कृष्णकान्तश्चतुर्वेद उपाध्यक्षपदं गतः॥३०७॥

जोशिवंशसमुत्पनः श्रीमुरलीमनोहरः।
मुख्यातिथिपदारूढः समुद्घाटितवान् महम्॥३०८॥

श्रीमान् सुन्दरराजश्च पद्यैः संस्कृतनिर्मितैः।
अतिथिस्वागतं कृत्वा प्राप्तवान् परमां मुदम्।।३०९।।

हरेकृष्णः शतपथी स्थानीयः सचिवोऽभवत्।
साहित्यशास्त्रनिष्णातो विधिवेत्ता तथा कविः।।३१०।।

स पुर्यां समवेतानां स्वागतं कृतवान् सताम्।
प्रत्युद्ग्रहीदतिप्रेम्णातिथीनातिथ्य-मर्मवित्।।३११।।

तत्र त्रिदश-भारत्याः कविसम्मेलनोत्सवः।
समायोज्यत सोत्साहं जनाकीर्णे सुमण्डपे।।३१२।।

श्रीश्री. सुन्दराजस्य मुख्यातिथ्ये महाकवेः।
रमाकान्तस्य शुक्लस्याध्यक्षतायां तथा कवेः।।३१३।।

चन्द्रकान्तस्य शुक्लस्य सान्निध्येऽथ विपश्चितः।
कविसम्मेलनस्यास्य प्रारम्भोऽभून्मुदावहः।।३१४।।

पद्यपुष्पोपहारेण सत्कृताः कवयस्तदा।
अध्यक्षश्चातिथिर्मुख्यः हरेकृष्णेन धीमता।।३१५।।

तत्रासन् काव्यरचनापटवः सुकवीश्वराः।
पञ्चविंशतिसंख्याका नानादिग्देशवासिनः।।३१६।।

मया पद्यमयी प्रस्तावना तत्र कृता शुभा।
आमन्त्रिताश्च कवयः काव्यपाठाय सादरम्।।३१७।।

'सर्वशुक्लोत्तरा'-ग्रन्थे प्राकाश्यं सा गताभवत्।
प्रस्तावना, मया सेह प्रस्तुता क्रियते पुनः।।३१८।।

"दारुब्रह्मजगन्नाथं श्रीसुभद्राबलान्वितम् ।
चन्द्रभागां च कोणार्कं गिरिं धवलपूर्वकम्॥३१९॥

लिंगराजं महेशानं गौरी-केदारमन्दिरम्।
दुग्धकुण्डं च मुक्तेशं सिद्धेश्वरमथो प्रभुम्॥३२०॥

नन्दनं काननं चैवोदयपूर्वगिरेर्गुहाम्।
खण्डोत्तरगिरिं चैव जयगोपालमन्दिरम्॥३२१॥

चिल्कासरोवरं चैव विश्वविद्यागृहाणि च।
बालेश्वरं तथा पारादीपं हीराकुडं तथा॥३२२॥

श्रीविहारं तथा वाणीविहारं ज्ञानदायकम्।
गौरीकुमारब्रह्माणं केशवं च दिगम्बरम्॥३२३॥

सुन्दरराजनामानं कविप्रेष्ठांस्तथापरान्।
प्रेम्णांके दधतीं वन्देऽहमुत्कलवसुन्धराम्॥३२४॥

हरे कृष्ण ! त्वमायाहि कवीनां मानदो भव।
कविसम्मेलनं प्राच्यविद्यासम्मेलने शृणु॥३२५॥

इदानीं भारतस्याहं कविकर्मरतान् बुधान्।
आवाहयामि संक्षिप्तकाव्यपाठाय सादरम्॥३२६॥

अल्पाक्षरमसन्दिग्धं रसपूर्णं च सारवत्।
काव्यं विजयतां तत्रभवतां प्रेरणाप्रदम्॥३२७॥

चन्द्रकान्तरमाकान्तौ शुक्लौ धन्यौ शुभोदयात्।
यत्कवीन् सुहृदश्चोभौ नन्देते मञ्चमाश्रितौ"॥३२८॥

**'भाति मे भारतं' काव्यं सस्वरं पठित मया।**
**तच्छ्रुत्वासन् सहृदयाः प्रसन्ना मण्डपस्थिताः॥३२९॥**

**समापन-समारोहे तत्र पुर्यधिवेशने।**
**गौरीकुमारः श्रीब्रह्मा ग्रन्थमेकं मदर्पितम्॥३३०॥**

**पटनायकसान्निध्ये लोकायार्पितवान् कविः।**
**हरेकृष्णश्च तं ग्रन्थं स्वीचकार नतो भवन्॥३३१॥**

**ततः साम्बशिवाशीर्भी रक्षितायां विदां पुरि।**
**वाराणस्यामभूद्भव्यो द्वाचत्वारिंश (४२) उत्सवः॥३३२॥**

**अब्धिशून्यनभोनेत्रे (२००४) वर्षे मासि नवम्बरे।**
**चतुर्थेऽह्नि समारब्धं त्रिदिनीयाधिवेशनम्॥३३३॥**

**मुख्यातिथिरासीच्छ्री कार्डोना जार्जपण्डितः।**
**येन व्याकरणं काश्यामधीतं सद्गुरोर्मुखात्॥३३४॥**

**मया तथेच्छारामेण सहैवायं गतो बुधः।**
**वाराणसीं, मण्डपस्थान् विज्ञान् समभिनन्दितुम्॥३३५॥**

**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयाजिरे।**
**कल्पिते मण्डपे जार्जमभिराजोऽभ्यनन्दयत्॥३३६॥**

**'अभिराज' इत्येवोक्ते ज्ञायते यस्य संस्तवः।**
**राजेन्द्रमिश्रनामानं को न जानाति भारते?॥३३७॥**

**असौ कुलपतिः काश्यां श्री सं.सं.वि.वि.-शोभितः।**
**कविर्विद्वान् महावाग्ग्मी सुसम्पादक-लेखकः॥३३८॥**

जार्जं मञ्चं समानीय स्थापयित्वा तथासने।
योग्यां तस्यार्हणां कृत्वाशृणोत्तस्याभिभाषणम्।।३३९।।

कृष्णकान्तचतुर्वेदो महाध्यक्षीयभाषणम्।
कृत्वोपचक्रे दोषज्ञान् वाग्मी शास्त्रविदां वरः।।३४०।।

मया सञ्चालितं मञ्चे कविसम्मेलनं महत्।
पञ्चघण्टावधिव्यापि युवप्रौढप्रसाददम्।।३४१।।

'भाति मे भारतं' नाम काव्यस्य नवमं नवम्।
लोकायार्पितवाँस्तत्र संस्करणं 'सनातनः'।।३४२।।

ततो जम्मूविश्वविद्यालये संयोजितं ह्यभूत्।
त्रिचत्वारिंशसंख्याकं प्राच्यविद्याधिवेशनम्।।३४३।।

तत्र राजेन्द्रमिश्रेण महाध्यक्षीयभाषणम्।
कृत्वा चमत्कृताः सर्वे विद्वांसस्तत्र सङ्गताः।।३४४।।

उपाध्यक्षोऽभवत्तत्र संस्कृतभाषणे रतः।
श्री सतीशोत्तरश्चन्द्रो झोपाह्वो बुधनायकः।।३४५।।

महासाचिव्यकर्मस्था सरोजा बुधमानिनी।
श्रीगंगाधरपण्डा च तस्याः साह्यं समाचरत्।।३४६।।

रमणीका जलाली च स्थानीयसचिवोऽभवत्।
वैष्णवी-रघुनाथौ हि नत्वा विज्ञाः गृहं गताः।।३४७।।

वस्वाकाशनभश्चन्द्र (२००८) वर्षेऽभूदधिवेशनम्।
कुरुक्षेत्रे चतुश्चत्वारिंशं विबुधसम्मतम्।।३४८।।

झाः सतीशोत्तरश्चन्द्रो महाध्यक्षासनस्थितः।
विज्ञानां पुरतः सम्यक् संस्कृतेनाभ्यभाषत॥३४९॥

समुद्घाटनकर्त्र्यासीत् सोनियागाँधिनामिका।
राजनेत्री तथा भाटे महासचिवतां गता:॥३५०॥

मिथिलेशकुमारोऽभूत् सहसाचिव्यवाहकः।
रणवीरसिंह इत्याख्यः स्थानीयसचिवोऽभवत्॥३५१॥

सायंकाले कुरुक्षेत्रे गीता-भवन-मञ्चके।
ममाध्यक्ष्येऽभवद्भव्यं सांस्कृतं कविमेलनम्॥३५२॥

मुख्यातिथ्यासने श्रीमान् महापात्रदिगम्बरः।
हरिदतः सुभाषश्च विशिष्टातिथितां गतौ॥३५३॥

ततस्तिरुपतौ पञ्च-चत्वारिंशाधिवेशनम्।
राष्ट्रिय-सं. विद्यापीठं समायोजितवन्मुदा॥३५४॥

तत्र सत्यव्रतः शास्त्री महाध्यक्षोऽभवद् बुधः।
भाटे सरोजा विदुषी महासचिवतां व्यधात्॥३५५॥

आसीत्स्थानीयसचिवः श्रीराधाकान्तठाकुरः।
नभश्चन्द्रनभोनेत्रे (२०१०) ऽब्देऽयं जातो महोत्सवः॥३५६॥

तत्र श्रद्धालुभिः प्राप्तं वेङ्कटेशस्य दर्शनम्।
आत्मा धन्यः कृतः सर्वैस्तत्प्रसादोपलब्धितः॥३५७॥

नेत्रेन्दुखाक्षिवर्षेऽभूत् (२०१२) षट्चत्वारिंश उत्सवः।

कश्मीरेषु श्रीनगरे विश्वविद्यालये श्रुते॥३५८॥

जानकीबल्लभः श्रीमान् पट्टनायकवंशजः।
महाध्यक्षोऽभवत्तत्र संस्कृतस्य बुधोत्तमः॥३५९॥

समुत्साहवती भाटे महासचिवतां गता।
स्थानीयसचिवत्वेन त्रिपाठी मतिदाभवत्॥३६०॥

अब्देऽब्धीन्दुनभोनेत्रे (२०१४) गुवाहाटीपुरेऽभवत्।
सप्तोत्तरचत्वारिंशं प्राच्यविद्याधिवेशनम्॥३६१॥

राधावल्लभ आचार्यो महाध्यक्षासनस्थितः।
त्रिपाठी निजवक्तव्यं प्रादात् तर्कसमन्वितम्॥३६२॥

आसीद् भाटे यथापूर्वं महासचिवतां गता।
आचार्या नलिनी मिश्रा स्थानीयसचिवोऽभवत्॥३६३॥

हरिद्वारे पुनः प्राच्य-विद्याया अधिवेशनम्।
अष्टोत्तरचत्वारिंशं (४८) समायोज्यत योजकैः॥३६४॥

उत्तराखण्ड सं.वि.वि.-प्रायोजित उत्सवः।
'नोटबन्दि'-हते काले श्रीहीन इव लक्षितः॥३६५॥

शास्त्रचन्द्रनभोनेत्र (२०१६) संख्यकेऽब्देऽधिवेशने।
अग्रवालो महावीरो महाध्यक्षोऽभवद् बुधः॥३६६॥

भाटे विद्योत्तमेहासीत् महासचिवतां गता।
स्थानीयसचिवोऽस्यासीच्छ्रीगिरीशकुमारकः॥३६७॥

सिद्धिब्रह्मवियत्पक्ष (२०१८)-खैष्टेऽब्दे मङ्मासके।

वेरावलाख्ये नगरे सोमेश्वरकृपाविते॥३६८॥

श्रीसोमनाथसंस्कृत-विश्वविद्यालये श्रुते।
एकोनपञ्चाशत्तमाधिवेशनमभूत् शुभम्॥३६८॥
समुद्घाटनविध्यर्थं केशूभाई समागतः।
गुर्जरप्रान्तशिक्षाया मन्त्री चाप्यागतोऽभवत्॥३७०॥
(युग्मकम्)

चन्द्रकान्तोऽभवच्छुक्लो महाध्यक्षासनस्थितः।
रमाकान्तश्च शुक्लोऽभूदुपाध्यक्षासनस्थितः॥३७१॥

अथाहं संप्रवक्ष्यामि तेषां नामानि धीमताम्।
उपाध्यक्षपदस्था ये प्राच्यविद्यां सिषेविरे॥३७२॥

एतेषामभिधानानि प्रज्ञापीयूषनामके।
ग्रन्थे प्रकाशितान्यासन् सोमनाथाधिवेशने॥३७३॥

चेन्नईनगरे पुर्यामुपाध्यक्षोऽभवद्बुधः।
कृष्णकान्तचतुर्वेदी वक्तृलेखकपण्डितः॥३७४॥

सतीशचन्द्रझा आसीदुपाध्यक्षपदं गतः।
श्रीजम्मूनगरे रम्ये योजिते ह्यधिवेशने॥३७५॥

रोहिताक्षाख्यनगरे शुकदेवो विदांवरः।
उपाध्यक्षपदं प्राप्तः प्राच्यविद्याधिवेशने॥३७६॥

श्रीशर्मा हरिदत्ताख्यस्तिरुपत्यधिवेशने।
उपाध्यक्षपदासीनः कविराचार्यपण्डितः॥३७७॥

अग्रवालो महावीरः कुरुक्षेत्राधिवेशने।

चित आसीदुपाध्यक्षो गुवाहाट्यधिवेशने॥३७८॥

अन्येषां किल विज्ञानां विषये नास्ति सूचना।
मत्सकाशे ततो नाहमुपाध्यक्षान् प्रकीर्तये॥३७९॥

चितः शुक्लो रमाकान्तो हरिद्वाराधिवेशने।
उपाध्यक्षासनासीनस्ततो वेरावलेऽभवत्॥३८०॥

श्रीगणेश उमाकान्तस्थिटे वेरावले चितः।
उपाध्यक्षासनस्थोऽ भून्नागरपूराधिवेशने॥३८१॥

महासाचिव्यमकरोद् भाटे व्याकृतिपण्डिता।
देवेन्द्रनाथपाण्डेयः स्थानीयसचिवोऽभवत्॥३८२॥

जानकीशरणाचार्यः स्थानीयः सचिवोऽभवत्।
अतिरिक्तासनासीनो विद्वज्जनप्रियङ्करः॥३८३॥

चौधरीवंशसम्भूतोऽर्कनाथो बुधकेसरी।
श्रीमान् कुलपतिस्तत्र ज्ञानां स्वागतकृद्बभौ॥३८४॥

विभिन्नेष्वनुभागेषु शोधपत्रकवाचनम्।
षोडशोत्तरसंस्कारनामनाटकमञ्चनम्॥३८५॥

वेदपाठः शुभो नृत्यप्रस्तुतिः सभ्यमोहिनी।
कविसम्मेलनं श्रव्यं तत्रायोज्यन्त योजकैः॥३८६॥

सीनेटाख्ये सभागारे कवीनां पञ्चविशतिः।
ममाध्यक्ष्येऽपठत्काव्यं श्रोतृकर्णरसायनम्॥३८७॥

श्रीमान् नारायणः शास्त्री परमेश्वरपूर्वभाक्।

अर्कनाथ-पटेल-श्रीचन्द्रभूषणझादयः॥३८८॥

विशिष्टातिथयोऽभूवन् काव्यपाठविधायिनः।
भाटेसरोजा-रजनी-पुजारा अपठन् कृतीः॥३८९॥

सौराष्ट्रे सोमनाथस्य समुद्रतटवर्तिनः।
विधाय दर्शनं सर्वेऽतिथयो धन्यतां गताः॥३९०॥

समापन-समारोहे श्रीमानोझा रमेशसन्।
मुख्यवक्तृस्वरूपेण प्राप्तः सभ्य-सुभाग्यतः॥३९१॥

सभाध्यक्ष-पदे चाहं योजकैः स्थापितोऽभवम्।
कुलपत्यनुरोधाच्च गीतवान् 'भाति भारतम्'॥३९२॥

घोषणा तत्र सञ्जाता महासचिवपक्षतः।
समायोज्यो रामटेके पञ्चाशत्तम उत्सवः॥३९३॥

व्यवस्था स्यात्सुरुचिरा नागपूराधिवेशने।
इति सञ्चिन्त्य स्थानीयः सचिवो मधुसूदनः॥३९४॥
रामटेके कालिदास-विश्वविद्यालये श्रुते।
सभामाकारयामासागस्तमासे ससूचनम्॥३९५॥

(युग्मकम्)

कुलपतिवरखेडी श्रीनिवासो मनीषी
सकलसमितिसभ्यान् मानयन्नातिथेयः।
अधिगगनशराङ्कं (५०) सत्रमालक्ष्य तेभ्यः
प्रणयवचनपूर्णं स्वागतं व्याजहार॥३९६॥

तस्य संरक्षकत्वेऽदात् सूचना मधुसूदनः।
पी.पी.टी. माध्यमेनाथ सदस्यैस्सा विचारिता॥३९७॥

'गैर्वाणी-पत्रकाराणामत्र सत्रं भवेदि'ति।
मया दत्तः परामर्शः सर्वैरङ्गीकृतोऽभवत्॥३९८॥

शब्दशास्त्रसरोहंसी महासचिवतां गता।
भाटे सरोजा संदृश्य पी.पी.टीं. हर्षमागता॥३९९॥

तस्मिन्नवसरे प्राच्यविद्याध्यक्षेण सादरम्।
श्रीगौतमपटेलेन 'वैबसाइट्' प्रवर्तिता॥४००॥

अथ सर्वे भोजनार्थं गताः कुलगुरोर्गृहे।
ततः सामूहिकं चित्रं सदस्यानां समङ्कितम्॥४०१॥

आकाशे वारिदा आसन् मन्दवृष्टिरथाभवत्।
अभिषिक्ता अतो मार्गाः सञ्जाताः सौख्यदायकाः॥४०२॥

मार्गेषु कारयानानि धूलेरुद्धूलनं विना।
अग्रेसराण्यशोभन्त लक्ष्यप्राप्त्यै यथा भटाः॥४०३॥

प्रथितः खिण्डसीनामा दृष्टोऽस्माभिर्जलाशयः।
स्थितप्रज्ञो यथा योगे विप्रुड्भिरविचालितः॥४०४॥

रसराजादिभिस्तस्मिन् स्थिते पोते मधुस्वरम्।
कालिदासकृतं काव्यं मेघदूतमगीयत॥४०५॥

तत्राल्पाहारवेश्मान्तः सुपक्ववट-भक्षणम्।
कृतं सर्वैरतिथिभिः सचायं स्फूर्तिदायकम्॥४०६॥

ततः सर्वे गता राज-महलाख्ये सुसज्जिते।

होटले प्रथिते कर्तुं भोजनं षड्रसान्वितम्॥४०७॥

आतिथेयोऽभवच्छ्रीमान् वरखेड़ी-महोदयः।
सग्धिर्जाता तृप्तिदात्री सर्वेषां हि विपश्चिताम्॥४०८॥

ततः सर्वे समायाता रामधामनि हर्षदे।
यथा पतत्रिणः सायं विश्रामार्थं तरुं श्रिताः॥४०९॥

अग्रिमे दिवसे सर्वे कालिदास-स्थलं गताः।
राममन्दिरमालोक्य प्रसादं परमाप्नुवन्॥४१०॥

परावृत्तास्ततः सर्वे विश्वविद्यालयस्थितम्।
'वर्णेकर'-सभागारमागता हृष्टचेतसः॥४११॥

तत्रायोज्यत संगोष्ठी शोधकर्त्रुपकारिणी।
मयापि तत्र वक्तव्यं किञ्चिद्दत्तं सभोचितम्॥४१२॥

मध्याह्नभोजनं कृत्वा प्रस्थिताः सकला बुधाः।
पुरं नागपुरं यत्रायोजितासीत् सभा विदाम्॥४१३॥

संस्कृतस्य प्रचारिण्या सभयाऽथोऽन्यसंस्थया।
विद्याचक्र्या कालिदास-विश्वविद्यालयेन च॥४१४॥

लीनारस्तोगिवर्यायाः सहस्रविधुदर्शनम्।
कविसम्मेलनं चात्र सम्पन्नं बुधतोषदम्॥४१५॥

वर्णेकरश्चन्द्रगुप्तः वीणागानु-बुधेश्वरी।
जोशिवर्य्यश्च सञ्जाता उत्सवस्य सुचालकाः॥४१६॥

तत्रापठन् स्वकीया रचनाः सर्वे कविश्रेष्ठाः।

लीना-पेन्नागस्ति-त्रिपाठिरसराजमिथिलेशाः॥४१७॥

गौतमपटेल-शुक्ल-ब्रजेश-रणजित्परागाद्याः।
मुख्यातिथिवरखेडी तथान्यकवयः सरस्वतीपुत्राः।।४१८।।
(युग्मकम्)

कविसम्मेलनाध्यक्षो रमाकान्तो विदाश्रवः।
'भाति मे भारतं' चान्यां रचनामपठन्मुदा।।४१९।।

कवीनां रचनाः श्रुत्वा श्रोतृभिः समबुध्यत।
कूजन्ति विहगा नैके नन्दने कल्पपादपे।।४२०।।

पाण्डेप्रकाशपत्नी माममिलत्सादरं तथा।
पत्युः स्मृतौ तया दत्तः पुरस्कारः कवेः कृते।।४२१।।

प्राप्तवाँस्तं पुरस्कारं श्रीपेन्नामधुसूदनः।
महोत्सवसमाप्तौ च स्वल्पाहारः समैः कृतः।।४२२।।

अस्मान् दिनकरः श्रीमान् प्रापयद् होटलं द्रुतम्।
विश्रम्य रात्रौ यत्राहमन्येद्युर्गृहमागतः।।४२३।।

आगत्य दिल्लीमन्येषु कार्येषु व्यापृतोऽभवम्।
यात्राया वर्णनं कर्तुं पद्यैरहमवाञ्छयम्।।४२४।।

कविप्रतिभयेदानीं पञ्चाशत्तममुत्सवम्।
घट्यमानं नागपुरे साक्षात्पश्यामि भाविनम्।।४२५।।

शून्य-पक्ष-नभो-नेत्र-संख्या (२०२०) ब्दारम्भ मासके।
शताब्दीं मानयन्तीं स्वां प्राच्यविद्यां नमाम्यहम्।।४२६।।

पञ्चाशत्तममायोज्य प्राच्यविद्याधिवेशनम्।
ककुका. सं.वि.वि. चित्तेऽभून्महदानन्दसम्मदः।।४२७।।

**महाध्यक्षासनस्थोऽत्र श्रीगौतमपटेलवित्।**
**महासचिवतां वोढुं सौ. भाटेऽत्र समागता॥४२८॥**

**स्थानीयः सचिवः पेन्ना मधुसूदनसत्कविः।**
**संरक्षकः श्रीनिवासः श्रमसक्तो दिवानिशम्॥४२९॥**

**वेंकय्या नायडूः श्रीमानुपराष्ट्रपतिः प्रियः।**
**भारतस्य समायात उद्घाटन-विधित्सया॥४३०॥**

**अनेकेऽतिथयः प्राप्ताः छात्रा अध्यापकास्तथा।**
**देशस्य सर्वराज्येभ्यः पठितुं स्वीयपत्रकम्॥४३१॥**

**रमेशचन्द्रशुक्लेन प्रणीते नवभारते।**
**पुराणोत्तरकाव्ये ये संस्कृतज्ञाः प्रकीर्तिताः॥४३२॥**
**तानालम्ब्य मयाप्येकं प्रस्तुतं शोधपत्रकम्।**
**इदानीन्तनगीर्वाणभारत्या अनुभागके॥४३३॥**

**(युग्मकम्)**

**शोधपत्रं पठित्वा ते नागरं रामणीयकम्।**
**दृष्ट्वा मोदं गमिष्यन्ति, भ्रमणं ज्ञान-मोददम्॥४३४॥**

**रामटेकपुरे रम्ये कालिदासयशःसिते।**
**प्राच्यविद्या-शताब्दीयं बुधानां मंगलं क्रियात्॥४३५॥**

**यस्या सम्मेलने प्राप्ता विज्ञा जिज्ञासवस्तथा।**
**संशोधनाब्धिं गाहन्ते प्राच्यविद्यां नतोऽस्मि ताम्॥४३६॥**

**यत्र विश्वं भवत्येकनीडं ज्ञानां सुमेधसाम्।**
**सन्मत्युद्बोधिनी ह्येषा प्राच्यविद्या जयेत्सदा॥४३७॥**

साङ्गा वेदाः ब्राह्मणाश्च तथोपनिषदः समाः।
बुधैर्यत्र विचार्यन्ते प्राच्यविद्यां नमामि ताम्॥४३८॥

जम्बूद्वीपापराख्यस्यैशियाखण्डस्य वाङ्मयम्।
मन्तव्यं यत्र विद्वद्भिः प्राच्यविद्यां नमामि ताम्॥४३९॥

यस्याः प्रेरणया प्राज्ञाः लौकिकीः सकलाः कलाः।
विचारयन्ति ध्यानेन प्राच्यविद्यां नमामि ताम्॥४४०॥

व्याकरणालङ्कारश्रीर्यत्र सद्भिर्गवेष्यते।
नानादिग्देशसम्प्राप्तैः प्राच्यविद्यां नतोऽस्मि ताम्॥४४१॥

इतिहासपुराणानां वैभवं यत्र वर्ण्यते।
विदुषां कामधेनुं तां प्राच्यविद्यां नमाम्यहम्॥४४२।

आयुर्वेद-धनुर्वेद-योगविद्या-विचारणा।
सुधीभिः क्रियते यत्र प्राच्यविद्यां नमामि ताम्॥४४३॥

यत्र मन्दिरनिर्माणं स्थापत्यादिकलादृशा।
वीक्ष्यते ज्ञैर्मनोयोगात्प्राच्यविद्यां नतोऽस्मि ताम्॥४४४॥

संस्कृतां पारसीकां चारबीं यत्र विपश्चितः।
पश्यन्ति तुलनादृष्ट्या प्राच्यविद्यां नतोऽस्मि ताम्॥४४५॥

वैदिकं चार्हतं बौद्धं चार्वाकं यत्र वाङ्मयम्।
संख्यावद्भिर्विचार्येत प्राच्यविद्यां नमामि ताम्॥४४६॥

तत्तत्क्षेत्रीयभाषाणां चिन्ता यत्र प्रवर्तते।
अनुभागे विशिष्टे तां प्राच्यविद्यां नमाम्यहम्॥४४७॥

कविसम्मेलनं यत्रायोज्यते कवितल्लजैः।
मनोबुद्धिप्रसादार्थं प्राच्यविद्यां नमामि ताम्।।४४८।।

स्थापत्यं च पुरातत्त्वं यस्यां साङ्ख्यिकी तथा।
अवलम्ब्य विचारः स्यात्प्राच्यविद्यां नमामि ताम्।।४४९।।

परिषत्पण्डितानां हि सोत्साहं यत्र योज्यते।
शास्त्राटवी-मृगेन्द्राणां प्राच्यविद्यां नमामि ताम्।।४५०।।

आश्रित्यालोच्यते विज्ञैर्यत्रार्वाचीनसंस्कृतम्।
प्राचीनां च नवीनां च प्राच्यविद्यां नमामि ताम्।।४५१।।

शिल्पाण्यथ लेखशास्त्रं धर्मः पाण्डुलिपिस्तथा।
विचार्यन्ते बुधैर्यत्र प्राच्यविद्यां नमामि ताम्।।४५२।।

गद्यपद्यनिबन्धानां काव्यानां च समीक्षणम्।
पण्डितैः क्रियते यत्र प्राच्यविद्यां नमामि ताम्।।४५३।।

भारतस्य प्रदेशेषु स्वमायोज्याधिवेशनम्।
देशदर्शनसन्धात्री प्राच्यविद्या जयेत्सदा।।४५४।।

पत्रकारतपस्याया मूल्याङ्कनविधायिनी।
जागरूका दिवानक्तं प्राच्यविद्या जयेत्सदा।।४५५।।

उज्जयिन्यां धारवाडे विशाखापत्तने तथा।
पुण्यपुर्यां हरिद्वारे कालिकातामहापुरे।।४५६।।

बोलपूरे कुरुक्षेत्रे पुर्यां तिरुपतौ तथा।
वाराणस्यां सोमनाथे योजिते ह्यधिवेशने।।४५७।।

गृहीतो मयका भागो विद्वांसश्चावलोकिताः।
कविसम्मेलनं किञ्चायोजि संहृष्टचेतसा॥४५८॥

संख्यावतां कवीनाञ्च संप्राप्य शुभकामनाः।
अष्टाधिकचत्वारिंशद्वत्सरा यापिता मया॥४५९॥

यैः प्राच्यविद्या विद्वद्भिः सेविता सेव्यतेऽथवा।
तान् सर्वान् भारतीपुत्रान् सादरं प्रणमाम्यहम्॥४६०॥

भारतस्य प्रतिष्ठा स्यात् सम्पूर्णेऽपि महीतले।
निर्भयाः सन्तु संसारे प्राच्यविद्या-मनीषिणः॥४६१॥

कृष्णोमाविष्णुलक्ष्मीप्राक्कान्तभ्राता सुधीप्रियः।
रमाजानी रमाकान्तो लब्धशम्भुकृपः कृती॥४६२॥

साहित्योदधिमन्थाद्रिब्रह्मानन्दतनूद्भवः।
प्रियम्वदायाः स्तन्येन परिपुष्ट उदारधीः॥४६३॥

वसिष्ठगोत्रसम्भूतः शुक्लोपाह्वः प्रसन्नधीः।
माध्यन्दिनशाखाध्यायी लब्धवर्णकुलोद्भवः॥४६४॥

वाणीविहारसंस्थे देहल्यां श्रीरमालये।
कुर्वन्निवासं कृतवान् प्राच्यविद्याधिवेशनम्॥४६५॥

शुभाशिषो लभन्तां मे पुत्राः पौत्राः स्नुषास्तथा।
चन्द्रमौलिस्तथानन्दवर्धनोऽभिनवः सुताः॥४६६॥

अर्चिताऽथ शिवाङ्गी च रम्याथो वरदस्तथा।
शुभाङ्गी सिन्धुजा चैव दिव्याङ्गी पौत्र-पौत्रिकाः॥४६७॥

अनिता-मोनिका-रीनाः स्नुषास्तिस्रोऽपि लेखने।
विघ्नं नोत्पादयामासुर्ये हि कोलाहलादिभिः॥४६८॥

खाद्यं पेयं यथाकालं दत्वा, मां समतूतुषन्।
सर्वेऽप्येते लभन्तां श्रीपरमेशकृपां सदा॥४६९॥

रमास्ते धर्मपत्नी मे सुखे दुःखे च सङ्गिनी।
तत्कृतं सर्वसाहाय्यं शब्दैर्वक्तुं न पारये॥४७०॥

परिवारस्य या छत्रं कुटुम्बपरिरक्षिका।
सुभद्रं कामये तस्या आत्मकल्याणहेतवे॥४७१॥

श्रीलोकेशकुमारेण शर्मणाक्षरयोजनम्।
मनोयोगेन विहितं स्वगृहेऽथ रमालये॥४७२॥

दुर्गाप्रसादसिंहेन संशोधनकर्मणि।
साहाय्यं कृतमित्येतौ धन्यवादस्य भाजनम्॥४७३॥

संस्कृतं प्रति सर्वेषामादरः स्याद्रुचिस्तथा।
पठित्वा प्राप्नुयुर्मोदं प्राच्यविद्याधिवेशनम्॥४७४॥

योऽप्येतत्पठेत्काव्यं तच्छये सन्तु सिद्धयः।
सस्कृतं सस्कृतिं विद्यां प्रत्यसौ भक्तिमान् भवेत्॥४७५॥

रसर्षिगगनाक्ष्यब्दे (२०७६ वि.) वैक्रमे मार्गशीर्षके।
एकादश्यां सिते पक्षे काव्यमेतत्प्रपूरितम्॥

॥इति रमाकान्तशुक्लप्रणीतं 'प्राच्यविद्याधिवेशनं' नाम काव्यं सम्पूर्णम्॥
मार्गशीर्ष शुक्ल एकादश्यां वि.सं. २०७६ तदनुसारम् ८/१२/२०१९

रमालयः, आर-६, वाणी-विहारः, नयी दिल्ली-११००५९
ई-मेल-sarvashukla@gmail.com

# अखिलभारतीयप्राच्यविद्यासम्मेलनस्य षड्विंशमधिवेशनम्

## उद्घाटनसत्रे प्रतिनिधयः

## उज्जयिनी (२६.१०.१९७२)



# चित्राणि



एवम्भूतैः सरस्वत्याः पुत्रैः संशोधनव्रतैः।
स्थापिताभा सभा प्राच्यविद्या-सम्मेलनाभिधा॥७॥



श्रीरामकृष्णो गोपालो भाण्डारकरवंशजः।
महाध्यक्षोऽभवत्तत्र विपश्चिद्भिः सुपूजितः॥१०॥



कुचनेत्राङ्कचन्द्राब्दे (१९२२) कलिकाता-पुरोत्तमे।
आचार्यः सिलवाँ लेवी महाध्यक्षोऽभवत्सुधीः॥१४-१५॥



डॉक्टरगङ्गानाथो झा महाध्यक्षपदे स्थितः।
महनीयैर्विचारैः स्वैः श्रोतॄन् भूर्यभ्यनन्दयत्॥१९॥



प्रयागे विश्वविद्यानामालये सुप्रतिष्ठिते।
महाध्यक्षोऽभवन्मोदी जीवनजी जम्शेदजी॥२३॥



भोगिनेत्राङ्कचन्द्राब्दे (१९२८) पञ्चमं ह्यधिवेशनम्।
लाहौरे विश्वविद्यानामालयेऽभूत्सुयोजितम्॥२६॥
शास्त्री हरप्रसादोऽभून्महाध्यक्षोऽत्र डाक्टरः।
विद्याविनयसम्पन्नो वाग्मी शोधपरायणः॥२७॥



षष्ठं पाटलिपुत्राख्ये पुरेऽभूदधिवेशनम्।
नभोरामांकचन्द्राव्दे (१९३०) बिहारोत्कलमानितम्॥२९॥
'रायबहादुर' विरुदालङ्कृत आसीन्महाध्यक्षः।
श्रीमान् हीरालालो विद्याविनयादिसम्पन्नः॥३०॥




तत्र काशीप्रसादोऽभून्महाध्यक्षो बुधोत्तमः।
जैसवालकुलोत्पन्नः इतिहासविशारदः॥३२॥



भूतरामाङ्कचन्द्राब्दे (१९३५) खैष्टेऽभूदधिवेशनम्।
अष्टमं श्रीमहीशूर-विश्वविद्यालये श्रुते॥३४॥
डाक्टरस्तत्र सा. कृष्ण-स्वाम्यय्यङ्गरपण्डितः।
प्राच्यविद्यास्तुतिं चक्रे महाध्यक्षासनस्थितः॥३५॥



श्रीमाला-श्रीपतिक्षेत्र (तिरुमाला-तिरुपति)-देवस्थानसमाह्वये।
खाब्धिनन्देन्दु (१९४०) वर्षेऽभूद्दशमं ह्यधिवेशनम्॥४०॥
महामना मालवीयो विद्वान्मदनमोहनः।
महाध्यक्षोऽभवत्तत्र ख्यातनामा सुदर्शनः॥४१॥



निशानाथाब्धिनन्देन्दु (१९४१) प्रथितेऽब्देऽधिवेशनम्।
एकादशमभूद्राग्य-नगरे भूतिपूरिते॥
गुलामो यजदान्यासीन्महाध्यक्षोऽत्र डाक्टरः॥४३-४४॥



काशीहिन्दू-विश्वविद्यालयेऽभूद्द्वादशं शुभम्।
रामाब्धिनन्दचन्द्राब्दे (१९४३) प्राच्यविद्याधिवेशनम्॥
श्री. कृष्ण बेल्वलकरो महाध्यक्षोऽत्र संबभौ॥४५-४६॥



ततो नागपुरे नागनदीवीचिसुलालिते।
रसाब्ध्यङ्केन्दु (१९४६) वर्षेऽभूत्त्रयोदशमनुत्तम्॥४७॥
विद्वज्जनैः समाकीर्णं प्राच्यविद्याधिवेशनम्।
यत्र प्रौढैस्तथा नव्यै-र्विद्वद्भिश्शोधनं कृतम्॥४८॥
पाण्डुरङ्गो वामनजः काणे-कुल-समुद्भवः।
महाध्यक्षोऽत्र शुशुभे धर्मशास्त्र-धुरन्धरः॥४९॥



वस्वब्धिग्रहचन्द्राब्दे (१९४८) दरभङ्गाह्वये पुरे।
चतुर्दशमभूत्सत्रं श्यामामातृकृपाकुले॥५२॥
दरभङ्गामहाराजस्तत्रातिथ्यप्रदोऽभवत्।
नानादिग्देश-सम्प्राप्त-विद्वद्भ्यो मानपूर्वकम्॥५३॥
मजूमदारोऽत्र रमेशचन्द्रोऽभवन्महाध्यक्षपदप्रतिष्ठः।
ऐतिह्यवेत्ताखिलभूप्रसिद्धः सदैव संशोधनकर्मलग्नः॥५४॥



इन्दुभूताङ्कचन्द्राऽब्दे (१९५१) सत्रं लक्ष्मणपुर्यभूत्।
षोडशं यत्र प्राज्ञानां सम्मर्दः सम्यगञ्चितः॥६३॥
शास्त्री का.अ. नीलकण्ठो महाध्यक्षो भवन्निह।
स्वीयसम्बोधने चक्रे प्राच्यविद्याविचारणाम्॥६४॥



वह्निभूतग्रहेन्द्वब्दे (१९५३) सप्तदशाधिवेशनम्।
अहम्दाबादनगरे समायोज्योज्यत सत्प्रियम्।।६५।।
महाध्यक्षोऽत्र सञ्जातश्चट्टोपाध्यायवंशजः।
श्री सुनीति कुमारः सन् प्राच्यविद्याविशारदः।।६७।।



अन्नामलाइ-नगरेऽष्टादशं ह्यधिवेशनम्।
भूतप्राणाङ्कचन्द्राब्दे (१९५५) संयोजितमभूत्ततः।।७०।।
सर्वेपल्लीपूर्वपदो राधाकृष्णाह्वयः सुधीः।
महाध्यक्षोऽभवत्तत्र षड्दर्शन-विशारदः।।७१।।



ऋषिभूताङ्कचन्द्राब्दे (१९५७) देहल्यामूनविंशकम्।
श्रीदेहली-विश्वविद्यालयः सत्रं समाह्वयत्॥७७॥
सदाशिवात्मजोऽनन्त आलतेकरवंशजः।
तत्राभवन्महाध्यक्षो प्राच्यविद्यादिवाकरः॥७८॥



भुवनेश्वरेऽभूद्विंशं सत्रमुत्साहमण्डितम्।
मिराशी वासुदेवः श्रीविष्णुरध्यक्षतां व्यधात्॥८०॥
नन्दभूताङ्कचन्द्राब्दे (१९५९) ओडिशा-राज्यमौत्कलः।
विश्वविद्यालयस्तथा योजयामासतुर्महम्॥८१॥



इन्दु-तर्काङ्क-चन्द्राब्दे (१९६१) जम्मु-कश्मीर-शासनम्।
अधिश्रीनगरं सत्रमेकविंशं स्वयोजयत्॥८२॥
डाक्टरो वेंकटरामो राघवो विबुधोत्तमः।
महाध्यक्षासनं भेजे विद्वत्कमलभास्करः॥८३॥



प्राण-दर्शन-नन्देन्दु (१९६५) प्रमितेऽब्देऽसमे ततः।
संयोजितं गुवाहाट्यां द्वाविंशमधिवेशनम्॥९०॥
श्रीवासुदेवशरणोऽग्रवालो बिबुधोत्तमः।
महाध्यक्षोऽस्य सत्रस्याभवत् पण्डितमानितः॥९१॥



अलीगढस्थमुस्लिम-विश्वविद्यालयेन वै।
अयोजिते महासत्रेऽध्यक्षोऽभूज्जैनपण्डितः॥९९।
आदिनाथो नेमिनाथ उपाध्येनामडाक्टरः।
संस्कृतप्राकृतापभ्रंशादिभाषासुपण्डितः॥१००॥



वाराणस्यामभूत्तीर्थङ्करसंख्यानुगो (२४) महः।
भोगि-शास्त्राङ्क-चन्द्राब्दे (१९६८) विश्वविद्यालयाङ्गने॥१०२॥
आचार्यश्रीविश्वबन्धुर्महाध्यक्षासने स्थितः।
प्राच्यविद्यानुसन्धान-प्रगत्यर्थमभाषत॥१०७॥



कलिकाता-पुरे जातं पञ्चविंशाधिवेशनम्।
नन्द-तर्काङ्कचन्द्राब्दे (१९६९) स्फूर्त्युत्साहसमन्वितम्॥११०॥
श्रीमान् परशुरामो ज्ञः श्रीलक्ष्मण-तनूद्भवः।
वैद्यवंशावतसोऽभून्महाध्यक्षोऽत्र डाक्टरः॥११२॥



उज्जयिन्यां महाकाल-नगर्याभवत्ततः।
नेत्रर्षिनन्दचन्द्राब्दे (१९७२) षड्विंशमधिवेशनम्॥११३॥



उज्जयिन्यां महाकाल-नगर्याभवत्ततः।
नेत्रर्षिनन्दचन्द्राब्दे (१९७२) षड्विंशमधिवेशनम्॥११३॥
दिनेशचन्द्रसर्कारस्तत्राध्यक्षपदे स्थितः।
स्वभाषणे समस्यानां समाधानानि प्रास्तुवत्॥११४॥



विश्वनाथात्मजः श्रीमान् पुरुषोत्तमडाक्टरः।
महाध्यक्षश्चितः प्राज्ञो बापटान्वयजन्मभाक्॥११९॥
कुरुक्षेत्रे समभवत् सप्तविंशाधिवेशनम्।
पु.वि. बापट आचार्यो महाध्यक्षासनं श्रितः॥१२२॥



धारवाडे ततो जातमष्टाविंशाधिवेशनम्।
कर्णाटकविश्वविद्यालयामन्त्रितमुद्भटम्॥१३३॥
कलम्बूर शिवो राममूर्तिस्तत्राभवद् बुधः।
महाध्यक्षो ज्ञानमूर्तिः श्रुतो मूर्तिकलाचणः॥१३४॥
रसर्षिनन्दचन्द्राब्दे (१९७६) धारवाडाधिवेशने॥१३५॥



भोग्यश्वाङ्केन्दुवर्षेऽभूत् (१९७८) पुण्यपत्तन-नामके।
महापुरेऽभवद्भव्यमूनत्रिंशाधिवेशनम्॥१४१॥
महाराष्ट्रप्रदेशस्य राज्यपालमहोदयः।
श्रीसादिकअली तत्र मुख्यातिथिरजायत॥१४२॥



वियद्वसुग्रहेन्द्वब्दे (१९८०) कार्तिके मासि पावने।
प्राङ्गणे विश्वभारत्या जातं त्रिंशाधिवेशनम्॥१५०॥
नीहाररञ्जनो राय आचार्योऽध्यक्षतां गतः।
रा.ना. दाण्डेकरश्चासीत् महासधिवपीठगः॥१५१॥



जी.सी.त्रिपाठिना साकं तत्र मे संस्तवोऽभवत्।
तथा परिचयश्चाभूत् एम्. डुकवित्जसंज्ञया॥१५३॥



ततो जयपुरे जातमेकत्रिंशाधिवेशनम्।
राजस्थानविश्वविद्यालयामन्त्रणपूर्वकम्॥१६५॥
नेत्राहिनन्दचन्द्राब्दे (१९८२) योजितेऽस्मिन् महोत्सवे।
श्रीगौरीनाथशास्त्र्यासीन्महाध्यक्षो महामतिः॥१६६॥



प्राणसिद्धिग्रहेन्द्वब्दे (१९८५) कर्णावत्यामभूत्ततः।
गुजरातविद्यापीठे द्वात्रिंशमधिवेशनम्॥१९२॥
घाटगेवंशसम्भूतोऽमृतः श्रीमाधवात्मजः।
अभाषत महाध्यक्षासनमास्थाय पण्डितः॥१९३॥



षडशीत्युत्तरैकोनविंशे (१९८६) खैष्टेऽथ वत्सरे।
एशियाटिक-सोस्याट्या कलिकातामहापुरे॥१९६॥





**ममाग्रजः कृष्णकान्तः शुक्ल आचार्य-डाक्टरः।**
**उमाकान्तः सभार्यश्च कलिकातां समागतौ॥२११॥**





दीपकोत्तरघोषेण श्रीरवीन्द्रस्य गीतयः।
अनूद्य श्राविताস्तत्र विद्वन्मानसमोददाः॥२०३॥



नन्दवस्वङ्कचन्द्राब्दे (१९८९) विशाखापत्तने पुरे।
पण्डितैर्मण्डितं जातं चतुस्त्रिंशाधिवेशनम्॥२१२॥
आन्ध्रोत्तरे विश्वविद्यालये संयोजितो महः।
स्मरणीयोऽभवत्पुंसां सज्जातिथ्यप्रकर्षवान्॥२१३॥
विशाखापत्तने श्रीमान् रा.ना. दाण्डेकरः सुधीः।
महाध्यक्षासने स्थित्वा सदःशोभामवर्धयत्॥२१४॥



(विशाखापत्तने अखिल भारतीय प्राच्यविद्या सम्मेलनस्य चतुस्त्रिंशत्तमेऽधिवेशने ५.१.१९८९ तमे दिनांके महाध्यक्षः प्रोफेसर रामचन्द्र नारायण दाण्डेकरः प्राकृत-जैनविद्यानुभागस्याध्यक्षो डॉ. रमाकान्त शुक्लश्च)

विशाखापत्तने श्रीमान् रा.ना. दाण्डेकरः सुधीः।
महाध्यक्षासने स्थित्वा सदःशोभामवर्धयत्॥२१४॥
प्राकृतस्य तथा जैन-विद्याया अनुभागके।
मया निर्व्यूढमाध्यक्ष्यं विद्वन्मान्यपुरस्सरम्॥२१५॥



आन्ध्रोत्तरे विश्वविद्यालये संयोजितो महः।
स्मरणीयोऽभवत्पुंसां सज्जातिथ्यप्रकर्षवान्॥२१३॥



उद्घाटनसत्रम्
( विशाखापत्तनाधिवेशनम् १९८९ )



प्राकृतस्य तथा जैन-विद्याया अनुभागके।
मया निर्व्यूढमाध्यक्ष्यं विद्वन्मानपुरस्सरम्।।२१७।।



विशाखापत्तनाधिवेशने




पण्डितानां सभा यत्र योजितासीन्महागृहे।
तत्राध्यक्षानुमत्यैव योजितं कविमेलनम्॥२१८॥

सूर्यनारायणः पेरिश्चकारोद्घाटनं बुधः।
कविसम्मेलनस्यास्य स्वीयैराशंसनैः शुभैः॥२१९॥

तस्य सान्निध्य एवासीत् चालितं कविमेलनम्।
त्रिघण्टाकालपर्यन्तं श्रोतृवृन्दसुखप्रदम्॥२२०॥

तत्राभिराजराजेन्द्रमिश्रादिकविकोकिलैः।
यथेच्छं कूजितं येन वसन्तस्यागमोऽभवत्॥२२१॥

कृष्णनारायणो राजदेवमिश्रोऽथ भास्करः।
श्री कामताप्रसादः श्री शर्मौगेटिपरीक्षितः॥२२२॥

प्रतापवन्द्योपाध्यायो जयश्रीर्बङ्गराज्यजा।
कृपारामादयस्तत्र प्रास्तुवन् कविता निजाः॥२२३॥





विशाखापत्तने दृष्टा समुद्रतटमागतैः।
'पनडुब्बी' ति विख्याता बृहन्नौका, विदां गणैः॥२२७॥
स्वातन्त्र्ययुद्धयज्ञस्य होतुरादिनिवासिनः।
प्रतिमां च विलोक्यासन् जनाः श्रद्धासुपूरिताः॥२२८॥
महोदधेस्तरंगाणां गर्जनं धावनं तथा।
श्रुत्वा दृष्ट्वा च सञ्जाताः बुधा विस्मितमानसाः॥२२९॥






श्रीकाङ्गडीगुरुकुल-विश्वविद्यालये ततः।
खाङ्कनन्देन्दु (१९९०) वर्षेऽभूत् पञ्चत्रिंशाधिवेशनम्॥२३०॥
गङ्गातरङ्गालिपूते हरिद्वारे सुयोजिते।
अस्मिन् सत्रे महायशो रमारञ्जन आययौ॥२३१॥




रामाङ्कनन्देन्द्वब्दके (१९९३) श्रीपुण्यपुर्यां सूरयः।
अधिवेशने षट्त्रिंशके मिलिता गवेषणकारिणः॥२४९॥







मिश्रो राजेन्द्रोऽभिराजो मनस्वी यं सम्पाद्याभूत्प्रसन्नो नितान्तम्।
तं ग्रन्थं 'श्रीदेववाणी-सुवासं' रा.ना. दाण्डेकार उद्घाट्य हृष्टः॥२६६॥

पञ्चभागात्मके ह्यस्मिन् ग्रन्थे मान्यमनीषिणाम्।







श्रीमान् मण्डनमिश्रोऽथो कवठेकरपण्डितः।
आद्याचरण आचार्यः संख्यावान् वेंकटाचलः॥२७०॥
जयमन्तमिश्र-पुष्पादीक्षिताशोकशास्त्रिणः।







दाण्डेकरवक्तव्यानन्तरं मिश्र-चालिते।
कवयो रचनाः स्वीयाः कविसम्मेलनेऽपठन्॥२६८॥






'अभिराजो' राजेन्द्रो मिश्रकुलस्यास्ति यो गरिमा।
स्वीयैः संस्कृतगीतैः रञ्जितवान् श्रोतृसङ्घातम्॥२६९॥





आसीन्महाध्यक्षवरः प्रभाकरो
नारायणः श्रीकवठेकरान्वयः।
प्रो. इङ्गाल्सडेनीयल एच एचो
मुख्यातिथिर्बोर्यधिवेशने बभौ॥२५०॥



अब्ध्यङ्कनन्दचन्द्राब्दे (१९९४) योजितेऽस्मिन् महोत्सवे।
के. कृष्णमूर्तिराचार्यो महाध्यक्षश्चितः पुरा॥२७४॥





रहिताक्षपुरे जातं सप्तत्रिंशाधिवेशनम्।
महर्षिश्रीदयानन्द-विश्वविद्यालये श्रुते।।२७३।।
कवीनां रचनानां तु पाठ आसीत् सुयोजितः।
शिक्षासम्बन्ध्यनुष्ठानमयमासीद्यतो मतः।।२७९।।
मया सञ्चालिते रात्रावस्मिन् कार्यक्रमे युवा।
लालाशंकर आसीन्मे गयावालः सहायकः।।२८०।।



ऋषिग्रहाङ्कचन्द्राब्दे (१९९७) कलिकातापुरे पुनः।
श्रीजादवपुराख्येन विश्वविद्यालयेन वै॥२८५॥
योजिते प्राच्यविद्याया अष्टात्रिंशाधिवेशने।
जयमन्तमिश्र आचार्यो महाध्यक्षोऽभवत् सुधीः॥२८६॥




ततो बड़ौदानगरे प्राच्यसंस्थानपक्षतः।
वस्वङ्कग्रहचन्द्राब्दे (१९९८) ऽष्टात्रिंशमधिवेशनम्॥२९४॥
किन्तु तत्र ममाध्यक्ष्यानुभागे कवयो मुदा।
अपठन् नूतनाः स्वीयाः रचना भारतीसुताः॥२९७॥



श्रीविहारे जगन्नाथ सं.वि. विद्यालयाङ्गने।
नेत्राकाशनभोनेत्र (२००२)-वर्षेऽभूद्विदुषां महः॥३०६॥
समापन् समारोहे तत्र पुर्यधिवेशने।
गौरीकुमारः श्रीब्रह्मा ग्रन्थमेकंमदर्पितम्॥३३०॥
पटनायकसान्निध्ये लोकायार्पितवान् कविः।
हरेकृष्णश्च तं ग्रन्थं स्वीचकार नतो भवन्॥३३१॥





हरेकृष्णः शतपथी स्थानीयः सचिवोऽभवत्।
साहित्यशास्त्रनिष्णातो विधिवेत्ता तथा कविः॥३१०॥



पुर्यां समुद्रतटे बालूकामूर्तिं पश्यन्तः प्रतिनिधियः





वाराणस्यामभूद्भव्यो द्वाचत्वारिंश (४२) उत्सवः।
अब्धिशून्यनभोनेत्रे (२००४) वर्षे मासि नवम्बरे॥३३२-३३३॥




'भाति मे भारतं' नाम काव्यस्य नवमं नवम्।
लोकायार्पितवाँस्तत्र संस्करणं 'सनातनः'॥३४२॥








वस्वाकाशनभश्चन्द्र (२००८) वर्षेऽभूदधिवेशनम्।
कुरुक्षेत्रे चतुश्चत्वारिंशं विबुधसम्मतम्॥३४८॥
झाः सतीशोत्तरश्चन्द्रो महाध्यक्षासनस्थितः।
ममाध्यक्ष्येऽभवद्भव्यं सांस्कृतं कविमेलनम्॥३४९-३५२॥



ततस्तिरुपतौ पञ्च-चत्वारिंशाधिवेशनम्।
राष्ट्रिय-सं. विद्यापीठं समायोजितवन्मुदा॥३५४॥
तत्र सत्यव्रतः शास्त्री महाध्यक्षोऽभवद् बुधः।
नभश्चन्द्रनभोनेत्रे (२०१०) ऽब्देऽयं जातो महोत्सवः॥३५५-३५६॥







आसीत्स्थानीयसचिवः श्रीराधाकान्तठाकुरः॥३५६॥



नेत्रेन्दुखाक्षिवर्षेऽभूत् (२०१२) षट्चत्वारिंश उत्सवः।
कश्मीरेषु श्रीनगरे विश्वविद्यालयेऽश्रुते॥३५८॥
जानकीबल्लभः श्रीमान् पट्टनायकवंशजः।
महाध्यक्षोऽभवत्तत्र संस्कृतस्य बुधोत्तमः॥३५९॥



श्रीनगराधिवेशनसज्जार्थं महाध्यक्षेण सहोपवेशने



अब्देऽब्धीन्दुनभोनेत्रे (२०१४) गुवाहाटीपुरेऽभवत्।
सप्तोत्तरचत्वारिंशं प्राच्यविद्याधिवेशनम्॥३६१॥

राधावल्लभ आचार्यो महाध्यक्षासनस्थितः।
त्रिपाठी निज वक्तव्यं प्रादात् तर्कसमन्वितम्॥३६२॥

आसीद् भाटे यथापूर्वं महासचिवतां गता।
आचार्या नलिनी मिश्रा स्थानीयसचिवोऽभवत्॥३६३॥

गुवाहाट्यधिवेशनस्य चित्राणि अग्रे दीयन्ते...






गुवाहाट्यधिवेशने साहित्याकादम्या
संस्कृतकविसम्मेलनमायोजितं यत्राध्यक्षत्वे रमाकान्त शुक्ला
उपस्थितः ( उपरि ) श्रोतारः ( नीचैः )





हरिद्वारे पुनः प्राच्य-विद्याया अधिवेशनम्।
अष्टोत्तरचत्वारिंशं (४८) समायोज्यत योजकैः॥३६४॥
शास्त्रचन्द्रनभोनेत्र (२०१६) संख्यकेऽब्देऽधिवेशने।
अग्रवालो महावीरो महाध्यक्षोऽभवद् बुधः॥३६६॥





सिद्धिब्रह्मवियत्पक्ष (२०१८)-खैष्टेऽब्दे मइमासके।
वेरावलाख्ये नगरे सोमेश्वरकृपाविते॥३६८॥
श्रीसोमनाथसंस्कृत-विश्वविद्यालये श्रुते।
एकोनपञ्चाशत्तमाधिवेशनमभूत् शुभम्॥३६८॥
चन्द्रकान्तोऽभवच्छुक्लो महाध्यक्षासनस्थितः।
रमाकान्तश्च शुक्लोऽभूदुपाध्यक्षासनस्थितः॥३७१॥
जानकीशरणाचार्यः स्थानीयः सचिवोऽभवत्।
अतिरिक्तासनासीनो विद्वज्जनप्रियङ्करः॥३८३॥





घोषणा तत्र सञ्जाता महासचिवपक्षतः।
समायोज्यो रामटेके पञ्चाशत्तम उत्सवः॥३९३॥
व्यवस्था स्यात्सुरुचिरा नागपूराधिवेशने।
इति सञ्चिन्त्य स्थानीयः सचिवो मधुसूदनः॥३९४॥
रामटेके कालिदास-विश्वविद्यालये श्रुते।
सभामाकारयामासागस्तमासे ससूचनम्॥३९५॥ (युग्मकम्)
कुलपतिवरखेडी श्रीनिवासो मनीषी
सकलसमितिसभ्यान् मानयन्नातिथेयः।
अधिगगनशराङ्कं (५०) सत्रमालक्ष्य तेभ्यः
प्रणयवचनपूर्णं स्वागतं व्याज्ञहार॥३९६॥
अथ सर्वे भोजनार्थं गताः कुलगुरोर्गृहे।





लीनारस्तोगिवर्यायाः सहस्रविधुदर्शनम्।
कविसम्मेलनं चात्र सम्पन्नं बुधतोषदम्।।४१५।।

# प्राच्यविद्याशताब्दीयं नागपूराधिवेशनम्

डॉ. रमाकान्त शुक्लः

नत्वेभास्यमथो वाणीं जगतः पितरौ तथा।
वर्णयामि नभोभूतं (५०) प्राच्यविद्याधिवेशनम्॥१॥

जन्वरीमासनवमे (९.१) दिनाङ्के गुरुवासरे।
वियद्यमनभोनेत्र खैष्टेऽब्दे (२०२०) प्रस्थितो गृहात्॥२॥

पुरुषार्थर्षियुग्मांक (७७४) माश्रित्योड्डयनं मया।
'इण्डिगो'व्योमयानेनारब्धा यात्रा सुखावहा॥३॥

क्षितिजे वामपार्श्वस्थेऽरुणाभा समदृश्यत।
यथा प्राच्यधरे रागरेखा सौन्दर्यवर्धिनी॥४॥

सप्तवादनवेलायां प्रत्यूषे नवमे दिने।
जनवर्या नभोनेत्रब्रह्मोरोजाङ्क (९.१.२०२० ई.) वत्सरे॥५॥

विमानपत्तनं बाबा-साहबाख्यासमन्वितम्।
सम्प्राप्तोऽहं यथाकालं हृष्टो नागपुरस्थितम्॥६॥

प्रत्यग्रहीन्मामुन्मेषो बोहातेकुलनन्दनः।
विमानपत्तनद्वारे सपाटलसुमार्पणम्॥७॥

ततोऽऽनैषीत्स मां 'रेशिम्' बागक्षेत्रे विराजिते।
स्मृतिभवनेऽतिख्याते सुखसौविध्यसंयुते॥८॥

श्री रूपेशो रुद्रकारस्तत्र मां प्रीति-पूर्वकम्।
शास्त्रखाक्ष्यङ्किते (२०६) कक्षे स्थापयित्वा मुदं गतः॥९॥

प्रातराशं ततो मह्यं 'पोहा'-चायात्मकं द्रुतम्।
आनीतवानस्ततन्द्री किञ्च नीरस्य कूपिकाम्॥१०॥

रूपेशः कविरस्तीति ज्ञात्वा तमहमुक्तवान्।
कवितां पठितुं स्वीयां सहृदानन्ददायिनीम्॥११॥

श्राविता कविता तेन प्रेमपीयूषपूरिता।
तस्मा उपहृतं प्रीत्या मयार्वाचीनसंस्कृतम्॥१२॥

उन्मेषेणांकितं चित्रं तस्यैतस्मिन् क्षणे द्रुतम्।
उपायनीकृतं तस्मा अप्यर्वाचीनसंस्कृतम्॥१३॥

सप्तोत्तरद्विशताङ्के कक्षे पश्चात्समागतः।
आचार्य एन.सी. पण्डा बैंकाकनगराद्बुधः॥१४॥

तेनार्पितं जनायास्मै थाइप्रज्ञाख्यपुस्तकम्।
तस्मा उपाहृतं प्रीत्या मयार्वाचीनसंस्कृतम्॥१५॥

ककुकाविविकुलसचिवः कुशलक्षेमावबोधाय।
सी.जी. विजयकुमारः कक्षे कृपया समायातः॥१६॥

तस्मा अपि नूत्नाङ्का अर्वाचीनस्य संस्कृतस्य मया।
उपहृत्य सुखं लब्धं विद्वान् विद्वच्छ्रमं वेत्ति॥१७॥

रूपेशोन्मेषाभ्यां सह वेदव्यास-भवनमाप्तोऽहम्।
अभ्यवहर्तुं तत्राभिराजदर्शन-सुखं प्रापम्॥१८॥

उपविश्य तेन साकं सग्धिं कृत्वालभं प्रीतिम्।
बहिरागत्यापश्यं शोभायात्रामहासज्जाम्॥१९॥

क्लृप्तोष्णीषाकल्याः आयोजनकारिणस्तथातिथयः।
छात्रा अथ नागरिकाः शोभायात्राङ्गतां प्राप्ताः॥२०॥

शैत्यं मयानुभूतं नागपुरेऽप्यैषमः सुखं प्रददत्।
दैवे सत्यनुकूले कुत्र न सुखदाः परिस्थितयः॥२१॥

तत्रातपे निषण्णं मामेकः शिक्षको ब्रूते।
'अष्टादशाब्दपूर्वं भवतः कविता श्रुता मयापूर्वा'॥२२॥

'भाति मे भारतं' नाम काव्यं क्वचित्
मन्मुखात्तेन कर्णातिथीकारितम्।
तच्च विज्ञाय सोऽभूत्प्रसन्नः परं
चित्रमेकं च जग्राह सत्रा मया॥२३॥

कक्षमागत्य मयका सहार्वाचीनसंस्कृतम्।
प्राप्तवान् प्रोल्लसन् प्रीत्या श्रीमिश्रोऽरुणरञ्जनः॥२४॥

संक्षिप्तचर्चां ग्रन्थस्य वीक्ष्यार्वाचीनसंस्कृते।
मुदमापन्मिश्रोपाह्वो डॉक्टरोऽरुणरञ्जनः॥२५॥

आचार्य एन.सी. पण्डा साहाय्यमकरोन्मम।
इतस्ततो विचरणे सोपानारोहणे तथा॥२६॥

श्रीमधुकराख्यभवने कार्यसमित्याः सभा सुनियतासीत्।
मां प्रापयितुं तत्र श्रीमुञ्जे कारसहित आयातः॥२७॥

तत्र सरोजाप्रार्थनमङ्गीकृत्यात्मरचितपद्यमयी।
कविता स्वरेण गीता 'वाणीं वन्दामहे' मयका॥२८॥

विचाराणां विमर्शोऽभूत् तत्र होरावधिस्ततः।
जातं सर्वसदस्येभ्यः सम्मेलनकिटार्पणम्॥२९॥

ककुकासंविविकुलगुरुरर्पितवान् पाठ्यसामग्रीम्।
श्रीनिवासवरखेड़ी कार्यसमित्याः सदस्येभ्यः॥३०॥

श्री गौरीनाथो रायस्तस्मिन्नवसरे मुदा।
स्वचित्राङ्कनयन्त्रेण मम चित्रं गृहीतवान्॥३१॥

समज्यानन्तरं सर्वे भोजनार्थं समागताः।
वेदव्यासाख्यभवने 'प्रसादगृह'-मण्डपे॥३२॥

विश्रामकक्षमायातः शयितुं यतवानहम्।
शैत्याधिक्येन नो निद्रां प्रापं किन्तु सुखप्रदाम्॥३३॥

दिल्ल्यां वृष्टिमुचो मेघा शीतं नागपुरं व्यधुः।
न प्रच्छदपटेनापि शैत्यहानिरजायत॥३४॥

यथावर्णि मया पूर्वं 'प्राच्यविद्याधिवेशने'।
समासेन तथैवाभून्नागपूराधिवेशनम्॥३५॥

तथापि विस्तरेणात्र वर्ण्यते मयका बुधाः।
प्राच्यविद्याशताब्दीयं नागपूराधिवेशनम्॥३६॥

अथोपयातो दिवसः शुभावहो योऽभूत्प्रतीक्ष्यो विबुधाग्रयायिनाम्।
यस्मिन्समुद्घाट्यमभूद्वियच्छरं (५०) श्रीप्राच्यविद्यासदसोऽधिवेशनम्॥३७॥

कविवर्यसुरेशभट्टसंज्ञे प्रथिते दिव्यसभागृहे महिष्ठे।
उपराष्ट्रपतिर्व्यधात्समुद्धाटनमतिभव्यतयाधिवेशनस्य॥३८॥

**मान्य एम्. वैंकयानायडू दीपकं ज्वालयन्मोददं श्रीप्रकाशप्रदम्।**
**भव्यमुद्घाट्य मोदं परं प्राप्तवान् प्राच्यविद्योत्सवं व्योमबाणांकितम्।।३९।।**

**शताधिकानां ग्रन्थानां प्रकाशोत्सवपर्वणि।**
**'दिण्डी' तिनृत्ययात्रासीत् प्रस्तुताभूत् सभागृहे।।४०।।**

**अस्मिन्नेव क्षणे मुख्यातिथिनोद्घाटनं कृतम्।**
**शताधिकानां ग्रन्थानां डिजिटल्' पद्धतिश्रितम्।।४१।।**

**ग्रन्थेष्वेतेष्वन्यतमो ममाप्यासीद् बुधप्रियः।**
**यस्यास्ते शीर्षकं रम्यं 'प्राच्यविद्याधिवेशनम्'।।४२।।**

**अस्मिनेवोत्सवे जाता प्राच्यविद्याशताब्द्यपि।**
**अध्यक्षभाषणानाञ्च प्रकाशनमभूत्ततः।।४३।।**

**उपराष्ट्रपतिः स्वीये भाषणे स्पष्टमुक्तवान्।**
**योगसंस्कृतसंस्काराः सेव्याः सर्वैः शुभप्रदाः।।४४।।**

**बालैः स्वमातृभाषायां ज्ञानमर्ज्यं तु शैशवे।**
**ततः संस्कृतभाषायाः ज्ञानं तेभ्यो हितावहम्।।४५।।**

**उपराष्ट्रपतौ याते मञ्चे आकारिताः समे।**
**सदस्याः कार्यसमितेः स्वागतायाधिवेशने।।४६।।**

**सदस्याः कार्यकारिण्या अलभन्ताभिनन्दनम्।**
**स्थानीयसमितेः पक्षात् तेषां नामान्यहं ब्रुवे।।४७।।**

**रजनीझा, मिथिलेशस्तथा च शुक्लो रमाकान्तः।**
**सिंहः प्रसूनदत्तो बेहेरा रणजितश्चैव।।४८।।**

मिश्रोऽरुणरञ्जनकविरथ मीनाशुक्लसंज्ञका विदुषी।
श्रीवैद्यनाथमिश्रः कुलकर्णी निर्मला चैव॥४९॥

राजेन्द्रो रसराजो गौरीनाथस्तथा रायः।
श्रीहर्षदेवमाधव उमा त्रिपाठी तथा रानी॥५०॥

झाः कामदेवसञ्ज्ञो विद्वान् विदुषी च पुष्पा झा।
परिणीता वसुरत्ना झा डॉक्टर उदयनाथश्च॥५१॥

श्रीगणेश उमाकान्तस्थिटे-वंशसमुद्भवः।
उपाध्यक्षपदासीनो विद्वदानन्दवर्धनः॥५२॥

श्री ब्रजेशकुमारश्च शुक्लवंशयशोध्वजः।
कोषाध्यक्षपदासीनः पद्मश्रीसमलङ्कृतः॥५३॥

ग्रन्थोत्तरीयस्मृतिचिह्नरूप-मुपायनं सादरमाप्य सर्वे।
अतीव हृष्टा अभवन् सदस्या मानो हि वित्तं महतामपूर्वम्॥५४॥

अस्मिन्नेवोत्सवे त्रिभ्यः कालिदासपदोत्तरः।
सेवाव्रती-सम्मानोऽभूदर्पितस्तत्र सादरम्॥५५॥

देवीसहायपाण्डेयो दीपोऽयोध्यानिवासकृत्।
वेदादिशास्त्रनिष्णातो हिन्दी-संस्कृतयोः कविः॥५६॥

श्रीमान् रामानुजाचार्यः कन्दाडै विबुधोत्तमः।
मणिद्राविड शास्त्री च एते समादृताः॥५७॥

एतेषामुपचित्यर्थं मन्त्री गडकरी तथा।
कुलस्य गुरुराचार्यो वरखेडी समागतौ॥५८॥

अस्मिन्नवसरे जातं प्रैष्यशुल्कदलार्पणम्।
श्रीसन्तोषकुमारोऽभूद् विशिष्टातिथिमानभाक्॥५९॥

आशीषो जायसवालो व्यासः श्रीगिरिशस्तथा।
रामचन्द्रो जयभये विशिष्टातिथयोऽभवन्॥६०॥

प्रैष्यमुद्राङ्कपत्रस्य विशिष्टपुटकस्य च।
विमोचनमभूद्येन सभागृहममूमुदत्॥६१॥

महामन्त्रिमहाध्यक्षौ सरोजा-गौतमाभिधौ।
भाटे-पटेलवंशीयौ कृतवन्तौ स्वभाषणम्॥६२॥

स्थानीयसचिवः प्राज्ञः श्रीपेन्नामधुसूदनः।
मत्प्रार्थनामुरीकृत्य घोषणां मञ्चतोऽकरोत्॥६३॥

दिल्लीस्थया देववाणी-परिषत्संस्थयाचिरम्।
जिज्ञासुभ्यः समर्प्येत 'प्राच्यविद्याधिवेशनम्'॥६४॥

आधुनिकसंस्कृताख्येऽनुभागके विद्यमानेभ्यः।
पत्रप्रस्तोतृभ्यः पुस्तकमेतत्समर्पणीयं स्यात्॥६५॥

समग्रं कालिदासीयं वाङ्मयं समपादयन्।
ये विद्वांसो महाराष्ट्र्यां तेऽभूवन्नभिनन्दिताः॥६६॥

ततो लोकार्पिता जाता 'वैदर्भी' नाम पत्रिका।
महत्त्वपूर्णा सामग्री यस्यां प्राकाश्यमागता॥६७॥

विदर्भविषये यद्यद् दिविषद्वाचि वर्णितम्।
तस्योद्धरणदानेन पत्रिकेयं विभूषिता॥६८॥

सम्पादयित्री बोकारे रेणुका डाक्टरोत्तमा।
सम्पादकीये वैदर्भ्या वैशिष्ट्यं समकीर्तयत्॥६९॥

विदर्भेऽतिसमृद्धास्ते साहित्यस्य परम्परा।
यस्या दिग्दर्शनं सम्यग् 'वैदर्भी' कुरुते बुधाः॥७०॥

ब्राह्मणेषु पुराणेषु महाभारतसूक्तिषु।
कालिदासादिकाव्येषु विदर्भः सादरं स्मृतः॥७१॥

बालरामायणे राजशेखरस्य कृतौ स्तुतः।
विदर्भविषयः सोऽयं रसवत्काव्यजन्मभूः॥७२॥

कविस्त्रिविक्रमो भट्टो नलचम्प्व्यां कृतौ मुदा।
अवर्णयद् विदर्भाख्यां श्रीदक्षिणसरस्वतीम्॥७३॥

श्रीनीलकण्ठदीक्षित-कविरपि हृष्टो जनान् स्तौति।
जातान् विदर्भविषये नलचरिताख्ये स्वनाटके महिते॥७४॥

पण्डितवसन्तरावः द्वादशपद्येषु शेवडेकुलजः।
सहृदयहृदयप्रीत्यै विदर्भदेशस्य वर्णनं कुरुते॥७५॥

सारस्वतमिति शीर्षकयुतेऽतिसंक्षिप्त आलेखे।
अधिवेशने प्रकाश्यान् ग्रन्थानधिकृत्य सूचना दत्ता॥७६॥

हिन्दी-संस्कृताङ्ग्लीय-भाषाग्रथितलेखनम्।
अवर्णयन् बुधश्रेष्ठा वैदर्भीं साहितीश्रियम्॥७७॥

श्रीपत्तरकिने-वंश्यो न.र. उत्साहपूरितः।
प्राच्यविद्यानुसन्धाने वैदर्भ योगमुक्तवान्॥७८॥

अधिसंस्कृतसाहित्यं सहभागं श्रीविदर्भमहिलानाम्।
आश्रित्य पुरी नन्दा विस्तृतलेखं समालिखद् विदुषी॥७९॥

विदर्भेऽस्वप्नभाषायां महाकाव्यानि सूरिभिः।
प्रणीतानि समाश्रित्य शारदा गाडगेऽलिखत्॥८०॥

अबोलीव्यासविदुषी लेखे तत्साह्यकर्त्र्यभूत्।
द्वादशमहाकाव्यानां संस्तवार्थं कृतश्रमा॥८१॥

विदर्भजान् कथाग्रन्थानालम्ब्यालेखमालिखत्।
स्मितासुधीरसञ्ज्ञा श्री-होटे-वंश-विभूषणम्॥८२॥

विदर्भस्य यशोवृद्धिं याकरोद्बुधमण्डली।
स्मितासुधीरहोटेज्ञादात्तस्या अपि संस्तवम्॥८३॥

विंश्यां शताब्द्यां जातानां विदुषामेकविंशतिः।
चर्चितास्ते तया लेखे स्वकीये बुधतोषदे॥८४॥

शारदा गाडगे स्वीयालेखेऽनूदितसांस्कृते।
साहित्ये नागपूरस्य योगदानमचिन्तयत्॥८५॥

तथाङ्ग्लभाषालिखिते लेखे श्रीपत्तरकिनः।
व्यचारयद्विस्तारेण सुरवाक्पत्रकारिताम्॥८६॥

पत्तरकिन एवास्यां पत्रिकायां प्रदत्तवान्।
संस्कृतरङ्गमञ्चस्य विदर्भीयस्य संस्तवम्॥८७॥

पत्तरकिन एन् आर आंग्लीबद्धे स्वपत्रके।
विदर्भप्राच्यविद्यायाः सम्मेलनमवर्णयत्॥८८॥

वैदर्भ्यां पूर्वजातानां प्राच्यविद्यासुपर्वणाम्।
कालक्रमानुसारेण सूचिश्चापि सुयोजिता॥८९॥

प्रकाशिता ये ये ग्रन्था विश्वविद्यालयेन ते।
श्रीवैदर्भ्यां सुशोभन्ते सूचीबद्धाः सशीर्षकाः॥९०॥

विश्वविद्यालयीयानि वृत्तानि विविधान्यसौ।
सचित्राणि प्रकाश्यास्ते 'वैदर्भी' सुयशस्विनी॥९१॥

वैदर्भीपत्रिकाङ्कस्य लोकार्पणमहोत्सवे।
ममापि सहभागोऽभूदिति सौभाग्यमेव मे॥९२॥

लोकार्पितायां जातायां 'वैदर्भ्यां' भव्यमञ्के।
वरखेड़ी-समुद्बोधस्तत्ततोऽनघमघोऽभवत्॥९३॥

दिवंगतेभ्यो विद्वद्भ्यः श्रद्धाञ्जलिरदीयत।
विश्वविद्यालयगीतं गीतं छात्रैस्ततः परम्॥९४॥

स्थानीयः सचिवो धीमान् श्रीपेन्नामधुसूदनः।
सर्वेभ्योऽर्पितवान् प्रीत्यातिथिभ्यः स्वागताञ्जलिम्॥९५॥

सी.जी. विजयकुमारः कुलसचिवो व्याकरणविद्वान्।
विज्ञाप्य धन्यवादं जितवान् चेतांसि सर्वेषाम्॥९६॥

सत्रसञ्चालनं कृत्वाभूताम् सर्वजनप्रियौ।
श्रीदिनकरमराठेऽथो परागो जोशिवंशजः॥९७॥

तदनु श्रीवरखेड़ी स्वकारयानेन मां प्रसादगृहम्।
प्रापय्य तोषमभजत् परोपकारप्रियाः सन्तः॥९८॥

अवधायका अनेके भोजन-भवने स्थिताः शिष्टाः।
अतिथिभ्यो ददतिस्म स्वादीयो भोजनं हृद्यम्॥९९॥

महाभाष्य-महाग्रन्थे निर्दिष्टा ये हि धातवः।
तेषां विवेचनां यत्र ग्रन्थं शोधात्मकं निजम्॥१००॥
गोविन्दो नाथ आचार्यो द्वारवङ्गसमागतः।
चौधरीवंश-मुक्ताभस्तत्र तं मे समार्पयत्॥१०१॥

(युग्मकम्)

योऽनुवादविधेश्शास्त्रं विचारयति साम्प्रतम्।
श्रीराधावल्लभो नैजं तं ग्रन्थं मे प्रदत्तवान्॥१०२॥

पुस्तकमेलायोज्यत रेशिमबागे दिनत्रयं यावत्।
गत्वा यत्राकुर्वन् विद्वांसो ज्ञानवृद्धिं स्वाम्॥१०३॥

कैश्चित्क्रीता ग्रन्थाः कैश्चिद्दृष्टास्तथा स्पृष्टाः।
कैश्चिद् द्रव्याभावे वैवश्यज्ञापकञ्च निःश्वसितम्॥१०४॥

पत्तरकिने समुत्साहविग्रहः स्मारिकामेकाम्।
मह्यं कृपयायच्छत् 'संस्कृतभवितव्य'-सम्बद्धाम्॥१०५॥

श्रीचन्द्रगुप्तवर्णेकरेण दत्तो विशेषाङ्कः।
भवितव्यस्य नवीनः साम्ग्र्या महितया लसितः॥१०६॥

मधुकरभवने जातो नामांकनपत्रपूरणस्य विधिः।
नरसिंहचरणपण्डाबुधेन साकं गतोऽहमपि तत्र॥१०७॥

माधव-यादव-मधुकर-वाल्मीकि-व्यास-ठेंगड़ी-सद्मसु।
शैक्षिकसत्रा[illegible] स्मृति-भवनेऽतिथिनिवासोऽभूत्॥१०८॥

श्रीधरभास्करवर्णेकरभवने योजिते महिते।
अर्वाचीनामरवागनुभागेऽहं ततो गतवान्॥१०९॥

आचार्यचन्द्रभूषण-झावर्योऽध्यक्षतां कुर्वन्।
मम पत्रं वाचयितुं मह्यं प्रादाच्छुभावसरम्॥११०॥

'गुरुवररमेशचन्द्रैः शुक्लै रचिते प्रथितकाव्ये।
नवभारते पुराणे संस्कृतविदुषां समुल्लेखः'॥१११॥
इतिविषयं संक्षिप्य प्रसाधितो यो मया लेखः।
तं प्रस्तूय सभायां चेतो मे निर्वृतिं प्रापत्॥११२॥

(युग्मकम्)

पञ्चदशप्रतिरूपाण्यादाय मदीयकाव्यस्य।
रूपेशरुद्रकारः समागतस्तत्र समयेन॥११३॥

पत्रपाठविधातृभ्यश्चन्द्रभूषणझास्तदा।
दत्तवान् सादरं काव्यं 'प्राच्यविद्याधिवेशनम्'॥११४॥

अस्माभिः कांक्षितं पूर्वं यत्पेन्ना मधुसूदनः।
अप्यत्रागत्य मत्काव्यं विद्वत्सु वितरिष्यति॥११५॥

किन्त्वसौ कार्यव्यापृत्या सुलभो नाभवत् सुधीः।
अतस्तदनुपस्थित्यामेव कार्यमिदं कृतम्॥११६॥

एकघण्टात्मकं कालं नीत्वा तदनुभागके।
कविवर्यसुरेशाख्यं सभागृहमहं गतः॥११७॥

ई-रिक्शायानमारुह्य सभागृहयियासुना।
मया ज्ञातं चालकोऽस्यास्ते संस्कृतसुधीजनः॥११८॥

भोपालतः स आयातः सेवार्थं विदुषामिह।
इहैवागत्य तेनेदं शिक्षितं यानचालनम्॥११९॥

सभागृहे श्रुतं विद्वत्स्वामिभद्रेशभाषणम्।
श्रीरमेशकुमारस्याथोद्‌घाटनसुभाषणम्॥१२०॥

भद्रेशो दासोऽक्षर-पुरुषोत्तमदर्शनं विवृण्वन् स्वम्।
व्याख्यानं कृत्वाभूज्जिज्ञासूनां महामान्यः॥१२१॥

कुलपतिपङ्कजचाँदे निरवहदध्यक्षतामत्र।
श्रीकुलपतिवरखेड़ी सान्निध्यं स्वं ददौ प्रीतः॥१२२॥

श्रीस्थानीयः सचिवः पेन्ना मधुसूदनः कविर्वाग्ग्मी।
विज्ञाप्य धन्यवादं सत्रं सम्पन्नतामनयत्॥१२३॥

सत्रसमन्वयकारी रसालडाक्टरदिनेशोऽभूत्।
यः समयेन समाप्तं कृतवान् कार्यक्रमं विज्ञः॥१२४॥

इहैव पूर्वं शास्त्रार्थ-सभासीद् योजिता शुभा।
सुब्रह्मण्यकरोदाभूद् यस्या उद्‌घाटको बुधः॥१२५॥

श्रीमान् रामानुजाचार्यः कन्दाडै विदुषां वरः।
भोंस्ले मधुकरश्चास्ताम् विशेषोपस्थितिप्रदौ॥१२६॥

अध्यक्षोऽस्याः सभायाः श्रीमणिद्रविडपण्डितः।
शास्त्राण्याश्रित्य विबुधा अभ्यभाषन्त विश्रुताः॥१२७॥

नापार्यत मयागन्तुं तत्र कालानुरोधतः।
अन्यत्र व्यापृतोऽभूवम् पत्रवाचनहेतुना॥१२८॥

अथ तत्रैव सायाह्ने सांस्कृतिकोत्सवोऽभवत्।
उद्घाटनं कृतं यस्य श्रीसन्दीपेन जोशिना॥१२९॥

अनुष्ठानं सांस्कृतिकं सानन्दमवलोकितम्।
श्रोत्रपेयं नेत्रलेह्यमात्मानन्दप्रदं सताम्॥१३०॥

तत्र शास्त्रीयनृत्याणि तथाभिनवनाट्यकम्।
आम्रपालीतिसंगीत-नाटकस्य प्रदर्शनम्॥१३१॥
प्रास्तूयन्त कलाकारैर्ये प्राप्ता बंगलोरतः।
मुम्बापुर्यास्तथा नागपुरादभ्यस्तसत्कलैः॥१३२॥

(युग्मकम्)

भरतकलाकादम्या तथाभिनवडान्सकम्पन्या।
सं.भा. प्रचारसभया प्रस्तुतयः प्रस्तुता हृद्याः॥१३३॥

पुरेचा विदुषी सन्ध्या डाक्टरोपाधिभूषिता।
प्रास्तौत्कार्यक्रमं हृद्यं सशिष्या नृत्यकोविदा॥१३४॥

प्रसादगृहसोपाने तद्दलेन सहांकितम्।
चित्रं मे प्रेषितं मह्यं चित्राङ्कनविधायिना॥१३५॥

वेदव्यास-सुभवनेऽभ्यवहृत्याहं मुदा प्राप्तः।
स्मृतिभवनस्थं कक्षं शयनार्थं रात्रिवेलायाम्॥१३६॥

एकादशेऽह्नि जन्वर्याः प्रातर्नित्यक्रियोत्तरम्।
श्रीश्रेयांशकुमारस्य कक्षं प्रति प्रतिष्ठितः॥१३७॥

चाँदकिरणसालूजा-लक्ष्मीनरसिंह-विद्वद्भ्याम्।
अर्पितमर्वाचीनं संस्कृतमिति पत्रकं मयका॥१३८॥

श्रीमान्नरसिंहचरणपण्डाचार्यस्तथा द्विवेदिवरः।
श्रीश्रेयांशकुमारः कुलपतिरास्तामुपस्थितौ तत्र॥१३९॥

आचार्यः सालूजा संस्कृतसंवर्धनप्रतिष्ठानात्।
ध्वन्यंकितां मदीयां कवितां संश्राव्य हृष्टोऽभूत्॥१४०॥

संश्रुत्याहमवोचं सालूजाचार्यवर्यमिदम्।
'अस्याः कवितायाः स्ताद्, अपरं ध्वन्यङ्कनं श्रीमन्'॥१४१॥

श्रुत्वा मद्वचनं श्रीसालूजाभिहितवान् समोदं माम्।
'भवतां स्वरेऽङ्किता स्याद् भारतजनताहमिति कविता॥१४२॥
दिल्लीस्थे संस्कृतसंवर्धननाम्नि प्रतिष्ठाने।
ध्वन्यङ्कनव्यवस्था सुलभास्ते कर्मिभिः साकम्'॥१४३॥

(युग्मकम्)

प्रसादगृहमागत्याल्पाहारं कृतवानहम्।
ततः किञ्चित्कालार्थं 'ठेंगड़ी'-भवनं गतः॥१४४॥

यदा श्री एन.सी. पण्डा श्री राधावल्लभस्तथा।
दत्तवन्तौ स्ववक्तव्यं तदाहं तत उत्थितः॥१४५॥

तत आधुनिकादित्यभारत्या अनुभागके।
श्रीश्रेयांशकुमारेण सहागच्छं मुदान्वितः॥१४६॥

तत्राध्यक्षेण झाचन्द्रभूषणेन मनीषिणा।
विमोचितं मद्रचितं 'प्राच्यविद्याधिवेशनम्'॥१४७॥

श्रीश्रेयांशकुमारश्च द्विवेदिकुलभूषणम्।
कविः कुलपतिस्तत्र विशिष्टातिथितां गतः॥१४८॥

साहित्याकादमी-दत्त-पुरस्कारः श्रुतः कविः।
माधवो हर्षदेवोऽभूदादरार्होऽतिथिस्तदा॥१४९॥

विमोचनानन्तरमिदं पुस्तकं समदीयत।
आलेखपाठकर्तृभ्योऽ स्मिन् महितेऽनुभागके॥१५०॥

ततश्च कार्यकारिण्याः समितौ समुपस्थितः।
निर्वाचने मतं दत्वाऽशनमण्डपमागतः॥१५१॥

दत्ता ग्रन्थास्तदा मह्यमनेकैर्विद्भिरात्मनः।
एतदर्थं मया तेभ्यो व्याहृतं स्वाभिनन्दनम्॥१५२॥

श्रीसत्यव्रतशास्त्रिभ्यस्तत्रार्वाचीनसंस्कृतम्।
अभिप्रायप्रदानार्थं यथाकालं मयार्पितम्॥१५३॥

भोजनानन्तरं यातः श्रोतुं पत्राणि धीमताम्।
आधुनिकामरगिरोऽनुभागे जनसङ्कुले॥१५४॥

जिज्ञासायाः समाधानं तथा प्रश्नसमुत्तरम्।
पत्रपाठसमाप्तौ च टिप्पण्यो विदुषां श्रुताः॥१५५॥

श्रीझावर्यः स्वसान्निध्य आसनं मे प्रदत्तवान्।
'भाति मे भारतं' गातुं मां च साग्रहमुक्तवान्॥१५६॥

तस्याध्यक्ष्ये ततो गीतं सर्वैः सम्मिल्य सस्वरम्।
'भाति मे भारतं' गीतं राष्ट्रप्रेमप्रवर्धकम्॥१५७॥

वाल्मीकि-ठेंगडी-भट्ट-सभागारेषु पण्डिताः।
शास्त्रार्थ-सत्रे व्याख्यान-गोष्ठ्यां चासन्नुपस्थिताः॥१५८॥

त्रिंशत्यधिकविद्वद्भिः कृतात्र सहभागिता।
प्राचीननव्यशास्त्रेषु प्रकाशः परिपातितः॥१५९॥

क्षीरसागरविभा विदुष्यतः स्त्रीचरित्रमवलम्ब्य रूपकम्।
प्रस्तुतीकृतवती मनोरमं द्रष्टृनेत्रमनसां मलिम्लुचम्॥१६०॥

कविवर्यसुरेशभट्टनाम्ना प्रथिते भव्यसभागृहेऽथ गत्वा।
प्रतिभाः प्रतिभागिनां नटानां प्रविलोक्याहमतिप्रसन्न आसम्॥१६१॥

स्वरकमलाख्या संस्था 'गर्जा माझा महाराष्ट्रम्'।
नाट्यं प्रस्तूय सहृदय-चेतांस्युत्साहितान्यकरोत्॥१६२॥

ककुकासंविविपक्षात् योगासनदर्शनं जातम्।
वर्षीयांश्च खुराना-महोदयोऽप्यासनान्यकरोत्॥१६३॥

कुमारी सात्त्विका पेन्ना प्रस्तूयान्ध्राख्यनाटकम्।
समस्तं रङ्गभवनं चित्रार्पितमिवाकरोत्॥१६४॥

नाट्यधर्मी च दोहातः सम्प्राप्याभिनयं व्यधात्।
भासप्रणीतप्रतिमा-नाटकस्य रसान्वितम्॥१६५॥

सांस्कृतिकं महं दृष्ट्वा कृत्वा भोजनमुत्तमम्।
द्विवेदिकल्पनालम्बाद् विश्रामस्थानमागमम्॥१६६॥

द्वादश्यामथ जन्वर्यां ठेंगडी-भवनं गताः।
शुक्लाभिराजश्रेयांशश्रीराधावल्लभादयः॥१६७॥

पेन्नामहोदस्तत्र समागत्य ब्रवीति नः।
कविगोष्ठ्याः कृतेऽस्माभिर्नात्र कार्यं प्रतीक्षणम्॥१६८॥

नववादनवेलायां ठेंगड्याख्ये सभागृहे योज्यम्।
संस्कृतकविसम्मेलन-मन्यत्रायोज्यते विलम्बेन॥१६९॥

अतोऽस्माभिः समैस्तत्र गन्तव्यं कारयानतः।
वयं सर्वे समं तेन गतास्तूर्णं सभागृहम्॥१७०॥

कविवर्यसुदेशभट-ख्याते महिते सभागृहे रम्ये।
संस्कृतकविसम्मेलन-मायोज्यत सज्जिते मञ्चे॥१७१॥

डाक्टर परागजोशी समन्वयनकर्तृतामभजत्।
अथ सौरभद्विवेदी सञ्चालनकर्मसंयुक्तः॥१७२॥

अस्योद्घाटनकर्तासमहं शुक्लो रमाकान्तः।
कविपरिवृढोऽभिराजोऽध्यक्षो राजेन्द्रमिश्रोऽभूत्॥१७३॥

अभिराजेनाथ मया दीपं प्रज्वाल्य योजकैः सार्धम्।
संस्कृतकविसम्मेलनमारब्धं सहृदयप्रीत्यै॥१७४॥

बुद्धेश्वरः षडङ्गी यां सम्पादयति सावधानः सन्।
लोकार्पिताभवत्सा 'व्यासश्रीः' पत्रिकाप्यत्र॥१७५॥

सञ्चालकानुरोधादुद्घाटनभाषणे समाप्तिमिते।
मया 'भति मे भारत' मिति गीतं गीतमंशेन॥१७६॥

श्रीहर्षदेवमाधव-पेन्नामधुसूदनस्तथा लीना।
बुद्धेश्वरः षडङ्गी त्रिपाठिरसराजराजेन्द्रः॥१७७॥

युवराजभट्टराई दीपो देवीसहायपाण्डेयः।
नन्दा पुरी जयश्रीश्चट्टोपाध्यायकुलजाता॥१७८॥

श्रीश्रेयांशकुमारो द्विवेदिवर्यश्च हरिदत्तः।
श्रीगोपबन्धुमिश्रः श्री राधावल्लभः सुकविः॥१७९॥

कवयित्री श्रुतिनाम्नी सर्वेऽप्येते निजाः कविताः।
संस्कृतगिरा निबद्धा अपठन् सम्मेलने हृष्टाः॥१८०॥

सञ्चालकानुरोधादध्यक्षस्यानुमत्या च।
शैलेशकुमार्युर्दू-गजलमगायद् बिहारतः प्राप्ता॥१८१॥

बिना कृच्छ्रतपोव्रातं बिना सच्छास्त्रसेवनम्।
श्रोतृभ्योऽ भूत्काव्यपाठः सद्योनिःश्रेयसप्रदः॥१८२॥

ह्रदेऽमृतस्य मग्नानां यथा भवति निर्वृतिः।
अभूत्तथैव सहृदां काव्यं संश्रुत्य निर्वृतिः॥१८३॥

ये शास्त्रश्रवणोद्विग्ना ये संशोधननीरसाः।
कविसम्मेलनं श्रुत्वा त आनन्दमवाप्नुवन्॥१८४॥

शमादिषट्कसम्पत्त्या चिराद्योऽनुभवो भवेत्।
सच्चिदानन्दरूपस्य सद्यः सोऽभूत्सचेतसाम्॥१८५॥

यं लब्ध्वा नापरं लाभं मन्यते नाधिकं ततः।
तं श्रोता काव्यतः प्रापत् ब्रह्मास्वादसमं रसम्॥१८६॥

यस्त्रयीसांख्ययोगादीनभ्यस्यानन्द आप्यते।
स झटित्येव सम्प्राप्तः श्रोतृभिः कविमेलने॥१८७॥

अथ पुण्यक्षयात्तेषां सहृदां कविमेलनम्।
समाप्तिमगमच्चाग्रे भाषणान्यभवन् विदाम्॥१८८॥

ततः प्राच्यसुविद्याया आयतिं संश्रयन् सुधीः।
अभाषतोत्साहपूर्वं विजयः पणशीकरः॥१८९॥

आध्यक्ष्यमभवत्तत्र मुरलीधरशर्मणः।
सान्निध्यं दत्तवन्तौ स्वं श्रीपेन्ना-वरखेडिनौ॥१९०॥

श्रीभार्गव उपेन्द्रोऽस्याभवत्सत्रस्य योजकः।
स धन्यवादं विज्ञाप्य स्वदायित्वमपूरयत्॥१९१॥

अथो भट्टसभागेहे सम्मेलन-समापनम्।
आयोजितमभूद्यत्र विदुषां सङ्गमोऽभवत्॥१९२॥

सी.जी. विजयकुमारः पेन्नामधुसूदनस्तथाचार्यः।
कुलसचिवः स्थानीयः सचिवश्चोपस्थितावास्ताम्॥१९३॥

भटकरकुलावतंसः श्रीमान् विजयः पुणेनगरवासी।
संगणकयन्त्र-पुरुषो मुख्यातिथिरत्र सम्प्राप्तः॥१९४॥

आचार्यः श्रीसत्यव्रतशास्त्री विश्वविख्यातः।
अतिथिर्विशिष्ट आसीद्विदां वरोऽस्यां समज्यायाम्॥१९५॥

प्रोफेसर आर.सी. सिन्हा आदरार्होऽतिथिर्भवन्।
दर्शनानां विशेषज्ञः समाहूतोऽभवद् बुधः॥१९६॥

श्रीनिवासाभिधः श्रीमान् वरखेड़ी-कुलाङ्कुरः।
विद्याविनयसम्पन्नः सभाध्यक्षासनस्थितः॥१९७॥

प्राच्यविद्यासभाया ये पूर्वाध्यक्षास्तथा च ये।
उपाध्यक्षचरा आसँस्ते सर्वे मञ्चमास्थिताः॥१९८॥

श्रीमान् सत्यव्रतः शास्त्री श्रीराधावल्लभः सुधीः।
चन्द्रकान्तस्तथा शुक्लस्त्रयोऽध्यक्षचरा इह॥१९९॥

शुकदेवः शर्मा किञ्च हरिदत्तस्तया थिटे।
उपाध्यक्षचरा एते मञ्चालङ्काररूपिणः॥२००॥

यतो हि मञ्चमासीनौ कविसम्मेलनाञ्चितम्।
मन्येऽतो नात्र दृश्येते रमाकान्ताभिराजकौ॥२०१॥

श्रीमान् राजेन्द्र मिश्रोऽभूदध्यक्षो जम्मुसङ्गमे।
सोमनाथे रमाकान्त उपाध्यक्षोऽभवत्कृती॥२०२॥

सम्पूर्तिसत्रस्यारम्भो वेदपाठपुरस्सरम्।
अजायत ततो गीतं छात्रैः स्वकुलगीतकम्॥२०३॥

ततः स्थानीयसचिवः श्री पेन्नामधुसूदनः।
स्वागतव्याहृतिं कार्य-वृत्तं च प्रास्तुवद् बुधः॥२०४॥

तेनेयं सूचना दत्ता यदस्मिन्नधिवेशने।
सहस्राधिकपत्राणां पाठोऽभूज्ज्ञानवर्धकः॥२०५॥

अतिथिस्वागतं जातं मञ्चस्थानां च माननम्।
ततो भाटेसरोजाया भाषणं समजायत॥२०६॥

श्री आर.सी. सिन्हा-प्राज्ञस्ततो वाचमुदीरयन्।
प्राच्यविद्यासुमाहात्म्यं प्रकटीकृतवान् मुदा॥२०७॥

मुख्यातिथिः श्रीविजयो वाग्मी भटकरः प्रधीः।
उक्तवान् प्राच्यविद्याया आयतिर्वर्तते शुभः॥२०८॥

विविधेष्वनुभागेषु सर्वोकृष्टदलप्रदाः।
प्राच्यविद्यासभापक्षात् विद्वांसोऽत्राभिनन्दिताः॥२०९॥

सारस्वत-शोभायात्रा-पुरस्कार-समर्पणम्।
सदस्यानुभवस्याथ प्रकाशनमजायत॥२१०॥

नवायाः कार्यकारिण्याः परिणामो न घोषितः।
महासचिवपीठस्थ-मान्यभाटेसरोजया॥२११॥

श्रुत्वेमं निर्णयं सर्वं सदनं व्याकुलं भवत्।
निःश्वासं दीर्घमुत्सृज्याभजन्मौनं सुसंस्कृति॥२१२॥

मूक आसीन्महाध्यक्षः पटेलो गौतमः सुधीः।
नाभवच्छतवर्षेषु क्वाप्यनिर्णय ईदृशः॥२१३॥

प्राच्यविद्यासभाया या महासचिवतां गता।
सास्ते यशःपताकास्याः किं वयं ब्रूमहेऽथ ताम्॥२१४॥

महासचिवपीठस्थः क्व दाण्डेरपण्डितः।
क्व चात्रभवती प्राच्यविद्यागौवरक्षिणी!॥२१५॥

नियमोल्लङ्घनं यद्यद् निर्वाचनविधावभूत्।
तन्नो न जाने नो वच्मि काव्यदुःखान्तताभयात्॥२१६॥

प्राच्यविद्याविधानस्य गोप्तुं या नियमान् वृता।
नियमानहनत्सैव रक्षको भक्षकोऽभवत्॥२१७॥

कृता वानुमता येन प्राच्यविद्यातिरस्क्रिया।
प्रतिष्ठां लोकचित्तेषु कथं स लभतां जनः॥२१८॥

भविष्यति क्व वागामि प्राच्यविद्याधिवेशनम्।
इत्यप्युद्घोषणा नाभून् नागपूराधिवेशने॥२१९॥

या दीप्तिरासीत्पूर्वेद्युर्महासचिवमस्तके।
उद्घोषानन्तरं सद्यः सा विलुप्ताभवत्क्वचित्॥२२०॥

महासचिवपीठस्था सरोजैवात्र कारणम्।
पश्यन्त्यापि यया सर्वं ह्यनिष्टं न निवारितम्॥२२१॥

सदस्यैर्बहुभिर्नागपुरीये ह्यधिवेशने।
तस्या ध्यानं समाकृष्टं न न्याय्यं किन्तु साकरोत्॥२२२॥

गुणा यत्र विलोक्यन्ते तत्र दोषा अपि स्थिताः।
यत्रार्जवं वसेत्तत्र कौटिल्यमपि दृश्यते॥२२३॥

अधीतसर्वशास्त्रेषु विद्वत्स्वपि विलोक्यते।
स्वार्थसिद्धिसमाकांक्षा येन केनापि हेतुना॥२२४॥

अधीत्य सर्वशास्त्राणि निपीयोपनिषत्सुधाम्।
हन्तानुचितकार्येषु लिप्यन्ते पण्डिता अपि॥२२५॥

चातुर्यातिशयालम्बी कूटं चरति यो जनः।
सोऽधिकारपदस्थोऽपि लोकपूज्यो न जायते॥२२६॥

कृतो वानुमतो दृष्टो भ्रष्टाचारोऽथ यैर्जनैः।
ते सर्वे दोषभाजः स्युस्तेषां तेजः प्रहीयते॥२२७॥

तपःस्वाध्यायनिरतान् पण्डितान् वीक्ष्य मानवः।
शुद्धचित्ताँस्तीर्थभूतान् सद्यः पापैः प्रमुच्यते॥२२८॥

सदने चिन्तयत्येवं तत्र प्रारभत स्वकम्।
भाषणं बुधमूर्धन्यः शास्त्री सत्यव्रतः प्रधीः॥२२९॥

तेन विश्वस्य भाषासु शब्दसम्पद्गवेषिता।
संस्कृतस्य तथा ज्ञानां प्रयत्ना इह कांक्षिताः॥२३०॥

औत्सुक्यजननं स्वीयं वैदुष्यपरिपूरितम्।
भाषणं टंकितं त्यक्त्वा तेन सार उदीरितः॥२३१॥

ततः कुलगुरुः श्रीमान् वरखेड़ी विदांवरः।
सभाध्यक्षीयदायित्वं वहन्निदमभाषत॥२३२॥

न केवलमतीतस्य प्राच्यविद्यास्ति गौरवम्।
अनागतस्याप्यस्तीयं लोकसौहित्यसाधिका॥२३३॥

नवीनतान्त्रिकी-प्राच्यविद्ययोर्हि समन्वये।
मनुष्यतायाः कल्याणमवश्यं साधितं भवेत्॥२३४॥

सारस्वतशोभायात्रा-सहभागिभ्य आर्पयन्।
पुरस्काराँस्ततोऽध्यक्ष-मुख्यातिथ्यादयस्तदा॥२३५॥

हरेकृष्णस्ततोऽगस्तिः डॉक्टरो युवकः कविः।
ज्ञापनं धन्यवादस्य कृतवान् वदतां वरः॥२३६॥

येभ्यो दत्ता धन्यवादा हरेकृष्णेन धीमता।
एकतन्त्रेण, कुर्वेऽहं तेषां नामानुकीर्तनम्॥२३७॥

प्राच्यविद्यासमज्यायाः पञ्चाशत्तमपर्वणः।
या याः समितयोऽभूवँस्ताः कीर्त्यन्ते मया समाः॥२३८॥

प्रधानसमितेस्तत्र सदस्या नवसंख्यकाः।
महासंरक्षको मन्त्री नितिनो गड्करीकुलः॥२३९॥

वरखेड़ी श्रीनिवासः संरक्षकपदस्थितः।
प्राच्यविद्यामहाध्यक्षः पटेलो गौतमो बुधः॥२४०॥

महासचिवपीठस्था सरोजा विदुषी श्रुता।
स्थानीयसचिवश्चासीत् श्री पेन्नामधुसदनः॥२४१॥

सहस्थानीयसचिवाः कार्यकौशलमूर्तयः।
चत्वार आसन् नामानि येषामग्रे वदाम्यहम्॥२४२॥

अगस्तिः श्री हरेकृष्णस्तथागस्तिः कलापिनी।
श्री मराठे दिनकरः परागो जोशिवंशजः॥२४३॥

आयोजनकर्त्री यास्ते समितिस्तत्र निर्मिता।
तत्सदस्याभिधेयानि प्रोच्यन्तेऽतः परं मया॥२४४॥

सी.जी. विजयकुमारः संकायाध्यक्ष-कुलसचिवः।
नन्दा पुर्याचार्या कृष्णकुमारश्च पाण्डेयः॥२४५॥

ललिता चन्द्रात्रेऽथो जोशी श्रीरामचन्द्र-वित्तेशः।
श्रीशिवहरेऽथ डाक्टर उमेशसञ्ज्ञः परीक्षणाधिकृतः॥२४६॥

श्री दीपकः कपाडे बोकारे रेणुका किञ्च।
राजीवरञ्जनोऽथो कालम्बे श्री प्रवीणश्च॥२४७॥

स्वागतसमितिरघट्यत तस्या आसन् सदस्या ये।
तेषामपि नामानि क्रमश इहाहं ब्रुवे समुदम्॥२४८॥

कुलपतिवरखेड़ी श्रीनिवास आचार्य उत्तमप्रकृतिः।
स्वामी गोविन्दगिरिः पंकजचाँदे उमा वैद्या॥२४९॥

शुक्लो रजनीशः श्रीविजेन्द्रपूर्व कुमारश्च।
काणे विनायकोऽथो कृपालतुमणे गिरीशजीव्यासः॥२५०॥

श्रीचद्रशेखरोऽथो जातो बावनकुले प्रथिते।
विश्रामजामदारो वी.एन.आइ.टी. निदेशकः प्रथितः॥२५१॥

उपाध्यायकुलजातः श्रीमान् भूषणकुमारश्च।
पणशीकरोऽथ विजयः राजकुमारस्तिरुपुडे च॥२५२॥

श्रीमोहब्बतसिंहो वर्णेकरचद्रगुप्तश्च।
श्रीमान् सुरेशशर्मा प्रभाकरो राव-मुँडले च॥२५३॥

शुभकामनाः प्रदत्ताः यैरधिवेशन-सफलतायै।
तेषां संख्या बृहती सालोक्या स्मारिकामध्ये॥२५४॥

ये स्वयंसेवकाश्छात्रा आतिथ्ये विदुषां रताः।
ते सर्वे धन्यवादार्हा विद्याविनयशोभिताः॥२५५॥

वक्तारोऽतिथयोऽध्यक्षाः समुद्धाटनकारकाः।
वार्ताहराः कलाकारा यातायातप्रबन्धकाः॥२५६॥

सुरक्षा-स्वच्छतावास-भोजनादिप्रबन्धकाः।
ते सर्वे धन्यवादार्हाः सभायोजकपक्षतः॥२५७॥

कथाले सुमितः श्रीमान् बोकारे रेणुका तथा।
सत्रसञ्चालनं कृत्वा मनस्तोषं परं गतौ॥२५८॥

'वन्देमातर' मित्यनेन महता गीतेन सर्वैर्जनैः
पूर्णत्वं विहितं समापनसभा-सत्रस्य माङ्गल्यदम्।
आपृच्छ्यातिथयः सुरेशसमितेर्गेहं समे प्रस्थिता
वेदव्यासपदोत्तरं सुभवनं भोक्तुं च गन्तुं गृहम्॥२५९॥

कुलपतिवरखेडी श्रीनिवासः सबन्धुः
सकलबुधजनानामातिथेयो वदान्यः।
ककुगुरुसुरवाणीविश्वविद्यालयेऽस्मिन्
जयति समभियोज्य प्राच्यविद्याशताब्दीम्॥२६०॥

आयातः 'स्मृतिभवने' ततश्च सद्यो
वेदाङ्गाम्बरनयनाङ्क ( २०६ ) कक्षमध्ये।
यदृत्तं त्रिषु दिवसेषु नागपूरे
तद्वृत्तं विलिखितुमुद्यतोऽहमासम्॥२६१॥

अथापरेऽह्नि दिल्ल्यर्थं यात्रासीन्मे सुनिश्चिता।
श्रीमानुन्मेषबोहाते प्रत्यूषे कक्षमागतः॥२६२॥

दिनेशः कामथः श्रीशः पुजारी देवपूर्वकः।
प्रायच्छतां प्रातराशं मह्यमादरपूर्वकम्॥२६३॥

विमानोड्डयनस्थानमुन्मेषो मानयद् द्रुतम्।
गृहं प्रति च यातो मामुक्त्वा प्रस्थानमङ्गलम्॥२६४॥

यथाकालमहं दिल्ल्यां रमालयमुपागतः।
माघे मकरसङ्क्रान्त्यां ( १५.१.२०२० ) काव्यमेतदपूरयम्॥२६५॥

यद्यन्मया द्रष्टुमशक्यत श्रीफणीशपुर्यामधिवेशनेऽस्मिन्।
तत्तत्समासेन निबद्धय विज्ञाः! मयोपलब्धो मनसि प्रसादः।।२६६।।

यच्छ्रीनागपुरं सुयोज्य महितं श्रीप्राच्यविद्यामहं
शाताब्दं यश आतनोति तदिदं लोके जयेत्कर्मठम्।
सर्वे 'राष्ट्रहिताय संस्कृत'मिति ध्येयं सुवाक्यं नुमो
'भूयाद्विश्वहिताय संस्कृत' मथो ब्रूमो जगच्छान्तये।।२६७।।

स्वाध्यायशोधकर्तृत्वैर्वाक्सुतैर्याच्र्यतेऽनिशम्।
सा प्राणिनां शमिच्छन्ती प्राच्यविद्या जयेत्सदा।।२६८।।

।इति श्रीप्रियंवदा-साहित्याचार्यकविरत्नब्रह्मानन्दशुक्लयो-
र्मध्यमात्मजेन महामहोपाध्याय-पद्मश्री-राष्ट्रपतिसम्मान-
कालिदास-नारद-वाल्मीकि-विद्यासागर-राष्ट्रस्वर-कविकुञ्जर-
संस्कृतराष्ट्रकवि-कविशिरोमणि-हिन्दी संस्कृतसेतु-
साहित्यमहोदधि-गीतसरस्वती-साहित्याकादमीसम्मान-प्रभृतिविविध-
विरुदसम्मानालङ्कृतेन 'भाति मे भारत' मित्यादीनां काव्यानां
कर्त्रा रमाजानिना रमाकान्तशुक्लेन प्रणीतं 'प्राच्यविद्याशताब्दीयं
नागपूराधिवेशनं' नाम काव्यं सम्पूर्णम्।।

(१५.१.२०२० ई.)
'रमालयः'
आर-६, वाणी-विहारः,
नई दिल्ली-११००५९

---

# चित्राणि



रूपेशः कविरस्तीति ज्ञात्वा तमहमुक्तवान्।
कवितां पठितुं स्वीयां सहृदानन्ददायिनीम्॥११॥



श्राविता कविता तेन प्रेमपीयूषपूरिता।
तस्मा उपहृतं प्रीत्या मयार्वाचीनसंस्कृतम्॥१२॥




उन्मेषेणांकितं चित्रं तस्यैतस्मिन् क्षणे द्रुतम्।
उपायनीकृतं तस्मा अप्यर्वाचीनसंस्कृतम्।।१३।।



सप्तोत्तरद्विशताङ्के कक्षे पश्चात्समागतः।
आचार्य एन.सी. पण्डा बैंकाकनगराद्बुधः॥१४॥
तेनार्पितं जनायास्मै थाइप्रज्ञाख्यपुस्तकम्।
तस्मा उपाहृतं प्रीत्या मयार्वाचीनसंस्कृतम्॥१५॥



ककुकाविविकुलसचिवः कुशलक्षेमावबोधाय।
सी.जी. विजयकुमारः कक्षे कृपया समायातः॥१६॥
तस्मा अपि नूत्नाङ्का अर्वाचीनस्य संस्कृतस्य मया।
उपहृत्य सुखं लब्धं विद्वान् विद्वच्छ्रमं वेत्ति॥१७॥



तत्रातपे निषण्णं मामेकः शिक्षको ब्रूते।
'अष्टादशाब्दपूर्वं भवतः कविता श्रुता मयापूर्वा'॥२२॥
'भाति मे भारतं' नाम काव्यं क्वचित्
मन्मुखात्तेन कर्णातिथीकारितम्।
तच्च विज्ञाय सोऽभूत्प्रसन्नः परं
चित्रमेकं च जग्राह सत्रा मया॥२३॥



कक्षमागत्य मयका सहार्वाचीनसंस्कृतम्।
प्राप्तवान् प्रोल्लसन् प्रीत्या श्रीमिश्रोऽरुणरञ्जनः॥२४॥




कविवर्यसुरेशभट्टसंज्ञे प्रथिते दिव्यसभागृहे महिष्ठे।
उपराष्ट्रपतिर्व्यधात्समुद्धाटनमतिभव्यतयाधिवेशनस्य।।३८।।



अस्मिन्नेव क्षणे मुख्यातिथिनोद्घाटनं कृतम्।
शताधिकानां ग्रन्थानां डिजिटल्' पद्धतिश्रितम्।।४१।।
अस्मिनेवोत्सवे जाता प्राच्यविद्याशताब्द्यपि।
अध्यक्षभाषणानाञ्च प्रकाशनमभूत्ततः।।४३।।







शताधिकानां ग्रन्थानां प्रकाशोत्सवपर्वणि।
'दिण्डी' तिनृत्ययात्रासीत् प्रस्तुताभूत् सभागृहे॥४०॥







डॉ. रजनीझाः, डॉ. ब्रजेशकुमारशुक्लः, डॉ. कामदेवझाः

उपराष्ट्रपतौ याते मञ्चे आकारिताः समे।
सदस्याः कार्यसमितेः स्वागतायाधिवेशने॥४६॥
सदस्याः कार्यकारिण्या अलभन्ताभिनन्दनम्।
स्थानीयसमितेः पक्षात्...॥४७॥







डॉ. रमाकान्तशुक्लः, डॉ. मीनाशुक्ला, डॉ. हर्षदेव माधवश्च अभिनन्द्यन्ते

(१०.१.२०२०)





सदस्याः कार्यकारिण्या अलभन्ताभिनन्दनम्।
स्थानीयसमितेः पक्षात् तेषां नामान्यहं ब्रुवे।।४७।।
रजनीझा, मिथिलेशस्तथा च शुक्लो रमाकान्तः।
सिंहः प्रसूनदत्तो बेहेरा रणजितश्चैव।।४८।।
मिश्रोऽरुणरञ्जनकविरथ मीनाशुक्लसंज्ञका विदुषी।
श्रीवैद्यनाथमिश्रः कुलकर्णी निर्मला चैव।।४९।।
राजेन्द्रो रसराजो गौरीनाथस्तथा रायः।
श्रीहर्षदेवमाधव उमा त्रिपाठी तथा रानी।।५०।।
झाः कामदेवसञ्ज्ञो विद्वान् विदुषी च पुष्पा झा।
परिणीता वसुरत्ना झा डॉक्टर उदयनाथश्च।।५१।।
श्रीगणेश उमाकान्तस्थिटे-वंशसमुद्भवः।
श्री ब्रजेशकुमारश्च शुक्लवंशयशोध्वजः।
ग्रन्थोत्तरीयस्मृतिचिह्नरूप-मुपायनं सादरमाप्य सर्वे।
अतीव हृष्टा अभवन् सदस्या मानो हि वित्तं महतामपूर्वम्।।५४।।



ततो लोकार्पिता जाता 'वैदर्भी' नाम पत्रिका।
महत्त्वपूर्णा सामग्री यस्यां प्राकाश्यमागता।।६७।।

वैदर्भीपत्रिकाङ्कस्य लोकार्पणमहोत्सवे।
ममापि सहभागोऽभूदिति सौभाग्यमेव मे।।९२।।

अस्मिन्नेवोत्सवे त्रिभ्यः कालिदासपदोत्तरः।
सेवाव्रती-सम्मानोऽभूदर्पितस्तत्र सादरम्।।५५।।

देवीसहायपाण्डेयो दीपोऽयोध्यानिवासकृत्।
वेदादिशास्त्रनिष्णातो हिन्दी-संस्कृतयोः कविः।।५६।।

श्रीमान् रामानुजाचार्यः कन्दाडै विबुधोत्तमः।
मणिद्राविड शास्त्री च एते समादृताः।।५७।।

एतेषामुपचित्यर्थं मन्त्री गडकरी तथा।
कुलस्य गुरुराचार्यो वरखेडी समागतौ।।५८।।







महामन्त्रिमहाध्यक्षौ सरोजा-गौतमाभिधौ।
भाटे-पटेलवंशीयौ कृतवन्तौ स्वभाषणम्॥९२॥
सत्रसञ्चालनं कृत्वाभूताम् सर्वजनप्रियौ।
श्रीदिनकरमराठेऽथो परागो जोशिवंशजः॥९७॥




वरखेड़ी-समुद्बोधस्तततोऽनघमघोऽभवत्



महाभाष्य-महाग्रन्थे निर्दिष्टा ये हि धातवः।
तेषां विवेचनां यत्र ग्रन्थं शोधात्मकं निजम्॥१००॥
गोविन्दो नाथ आचार्यो द्वारवङ्गसमागतः।
चौधरीवंश-मुक्ताभस्तत्र तं मे समार्पयत्॥१०१॥

(युग्मकम्)

योऽनुवाददविधेश्शास्त्रं विचारयति साम्प्रतम्।
श्रीराधावल्लभो नैजं तं ग्रन्थं मे प्रदत्तवान्॥१०२॥







श्रीधरभास्करवर्णेकरभवने योजिते महिते।
अर्वाचीनामरवागनुभागेऽहं ततो गतवान्॥१०९॥
आचार्यचन्द्रभूषण-झावर्योऽध्यक्षतां कुर्वन्।
मम पत्रं वाचयितुं मह्यं प्रादाच्छुभावसरम्॥११०॥
'गुरुवररमेशचन्द्रैः शुक्लै रचिते प्रथितकाव्ये।
पत्रपाठविधातृभ्यश्चन्द्रभूषणझास्तदा।
दत्तवान् सादरं काव्यं 'प्राच्यविद्याधिवेशनम्'॥११४॥







पुरेचा विदुषी सन्ध्या डाक्टरोपाधिभूषिता।
प्रास्तौत्कार्यक्रमं हृद्यं सशिष्या नृत्यकोविदा॥१३४॥
प्रसादगृहसोपाने तद्दलेन सहांकितम्।
चित्रं मे प्रेषितं मह्यं चित्राङ्कनविधायिना॥१३५॥



चाँदकिरणसालूजा-लक्ष्मीनरसिंह-विद्वद्भ्याम्।
अर्पितमर्वाचीनं संस्कृतमिति पत्रकं मयका॥१३८॥
श्रीमान्नरसिंहचरणपण्डाचार्यस्तथा द्विवेदिवरः।
श्रीश्रेयांशकुमारः कुलपतिरास्तामुपस्थितौ तत्र॥१३९॥



आचार्यः सालूजा संस्कृतसंवर्धनप्रतिष्ठानात्।
ध्वन्यंकितां मदीयां कवितां संश्राव्य हृष्टोऽभूत्॥१४०॥
संश्रुत्याहमवोचं सालूजाचार्यवर्यमिदम्।
'अस्याः कवितायाः स्ताद्, अपरं ध्वन्यङ्कनं श्रीमन्'॥१४१॥







तत्राध्यक्षेण झाचन्द्रभूषणेन मनीषिणा।
विमोचितं मद्रचितं 'प्राच्यविद्याधिवेशनम्'॥१४७॥
विमोचनानन्तरमिदं पुस्तकं समदीयत।
आलेखपाठकर्तृभ्योऽस्मिन् महितेऽनुभागके॥१४८॥



भोजनानन्तरं यातः श्रोतुं पत्राणि धीमताम्।
आधुनिकामरगिरोऽनुभागे जनसङ्कुले॥१५४॥
जिज्ञासायाः समाधानं तथा प्रश्नसमुत्तरम्।
पत्रपाठसमाप्तौ च टिप्पण्यो विदुषां श्रुताः॥१५५॥







विमोचनानन्तरमिदं पुस्तकं समदीयत।



आलेखपाठकर्तृभ्योऽ स्मिन् महितेऽनुभागके।।१५०।।



श्रीसत्यव्रतशास्त्रिभ्यस्तत्रार्वाचीनसंस्कृतम्।
अभिप्रायप्रदानार्थं यथाकालं मयार्पितम्॥१५३॥





श्रीझावर्यः स्वसान्निध्य आसनं मे प्रदत्तवान्।
'भाति मे भारतं' गातुं मां च साग्रहमुक्तवान्॥१५६॥
तस्याध्यक्ष्ये ततो गीतं सर्वैः सम्मिल्य सस्वरम्।
'भाति मे भारतं' गीतं राष्ट्रप्रेमप्रवर्धकम्॥१५७॥





कविवर्यसुरेशभट-ख्याते महिते सभागृहे रम्ये।
संस्कृतकविसम्मेलन-मायोज्यत सज्जिते मञ्चे॥१७१॥
अस्योद्घाटनकर्तासमहं शुक्लो रमाकान्तः।
कविपरिवृढोऽभिराजोऽध्यक्षो राजेन्द्रमिश्रोऽभूत्॥१७३॥
अभिराजेनाथ मया दीपं प्रज्वाल्य योजकैः सार्धम्।

संस्कृतकविसम्मेलनमारब्धं सहृदयप्रीत्यै॥१७४॥





डाक्टर परागजोशी समन्वयनकर्तृतामभजत्।
अथ सौरभद्विवेदी सञ्चालनकर्मसंयुक्तः॥१७२॥

सञ्चालकानुरोधादुद्घाटनभाषणे समाप्तिमिते।
मया 'भति मे भारत' मिति गीतं गीतमंशेन॥१७६॥




बुद्धेश्वरः षडङ्गी यां सम्पादयति सावधानः सन्।
लोकार्पिताभवत्सा 'व्यासश्रीः' पत्रिकाप्यत्र॥१७५॥




डॉ. देवीसहायपाण्डेयो 'दीपः कवितां पठन्'



अथो भट्टसभागेहे सम्मेलन-समापनम्।
आयोजितमभूद्यत्र विदुषां सङ्गमोऽभवत्॥१९२॥
भटकरकुलावतंसः श्रीमान् विजयः पुणेनगरवासी।
संगणकयन्त्र-पुरुषो मुख्यातिथिरत्र सम्प्राप्तः॥१९४॥
विविधेष्वनुभागेषु सर्वोत्कृष्टदलप्रदाः।
प्राच्यविद्यासभापक्षात् विद्वांसोऽत्राभिनन्दिताः॥२०९॥



कुलपतिवरखेडी श्रीनिवासः सबन्धुः
सकलबुधजनानामातिथेयो वदान्यः।
ककुगुरुसुरवाणीविश्वविद्यालयेऽस्मिन्
जयति समभियोज्य प्राच्यविद्याशताब्दीम्॥२६०॥

# अखिलभारतीयप्राच्यविद्यासम्मेलनम्

## षट्त्रिंशत्तममधिवेशनम्

त्रिनवत्युत्तरैकोनविंशतिशततमेशवीयेऽब्दे मईमासस्य अष्टाविंश - त्रिंशत्तमदिनाङ्केषु

भाण्डारकरप्राच्यविद्यासंशोधनसंस्थाने पुण्यपत्तनस्थे आयोजितम्

A.I.O.C. 36TH SESSION B. O.R.I. PUNE

(28-30.5.1993)

साहित्यिकसंस्कृतानुभगस्य

# अध्यक्षीयं भाषणम्

## PRESIDENTIAL ADDRESS OF THE CLASSICAL SANSKRIT SECTION

भाषणकर्ता

**डॉ. रमाकान्त शुक्ल**

एम.ए. (हिन्दी-संस्कृतयोः), साहित्याचार्यः, पीएच.डी.

दिल्लीविश्वविद्यालस्य राजधानी-कालेजे हिन्दी-विभागे रीडरः,

प्रधानसम्पादकः 'अर्वाचीनसंस्कृतम्' नई दिल्ली

## ॥ श्रीसरस्वत्यै नमः ॥

अ.भ. प्राच्यविद्यासम्मेलनस्य षट्त्रिंशत्तमाधिवेशनस्य मुख्यातिथयः मान्याः आचार्य डेनियल एच.आर. इंगल्स महाभागाः, महाध्यक्षा डॉ. प्रभाकर नारायण कवठेकराः प्राच्यविवदाता प्रो. रामचन्द्र नारायण दाण्डेकराः, नानादिग्देशागताः सारस्वततपःपूतान्तरात्मानो विद्वांसो विदुष्यः, प्रेयांसः शोधकर्तारश्च,

अखिलभारतीयप्राच्यविद्यासम्मेलनस्य षट्त्रिंशत्तमाधिवेशनस्य 'साहित्यिक (क्लासिकल) संस्कृता' नुभागस्य महानीयमध्यक्षपदं भवद्भिर्लम्भितोऽयं जनः सर्वप्रथमं पूर्वाध्यक्षेभ्यो नमोवाकं प्रशास्ते तदनु च सर्वेभ्योऽप्यत्र समागतेभ्यो विद्याव्रतिभ्यः स्वागतं व्याहरति।

अथानन्तरं विगतसार्धवर्षद्वयान्तराले साहित्यिकसंस्कृतमवलम्ब्य यदनुसन्धानं, समीक्षणं, सर्वेक्षणादिकं च जातम् यच्च नवीनरचनानां प्रणयनं जातं याश्च संस्कृतसाहित्यजगति स्मरणीया घटना जातास्तद्विषये सर्वेक्षणात्मकं किञ्चिन्निवेदयितुमहीते।

'क्लासिकल' पदस्य संस्कृतपर्यायार्थं मया 'साहित्यिक' पदं प्रयुज्यते। यद्यप्येतत्कृते पूर्वसूरिभिः 'श्रेण्य'-'अभिजाता' दिपदानि प्रयुज्यन्ते तथापि सहजावबोधार्यं मया 'क्लासिकल'-संस्कृतस्यार्थे साहित्यिक- संस्कृतमिति पदं प्रस्तूयते। साहित्यिकसंस्कृते हि रामायण-महाभारत-पुराण-नाटक-काव्यादीन्यन्तर्भवन्ति यत्र रचनाकर्तुः साधना कमपि लोकोत्तरमानन्दं निदधाति। अयमानन्दः 'रस' इति पदेन काव्यशास्त्रिभिः परिभाष्यते। अयमेव च काव्यस्य प्राणत्वेन स्वीक्रियते मनीषिभिः। रसदशामाप्ता जना पुण्यवन्तो भवन्ति 'पुण्यवन्तः प्रमिण्वन्ति योगिवत् रससन्ततिम्।'

अद्य त्रिनवत्युत्तरैकोनविंशतिशततमेशवीयेऽब्दे मईमासस्य अष्टाविंशतितारिकायां पुण्यनगरे यदिदमधिवेशनं प्रारभते तस्य महन्महत्त्वं विद्यते। पुण्नगरं हि न केवलमैतिहासिकदृशा अपि तु सांस्कृतिकसाहित्यिकदृशापि नैजं वैशिष्ट्यं पुष्णाति। सह्याद्रि-सुषमामण्डितस्य भीमातरङ्गैर्लालितस्य पुण्यनगराञ्चलस्य क्रोडे स्थित्वा कियन्तो देशभक्ताः

स्वातन्त्र्यवीराः, विद्वांसः, रचनाकाराश्च भारतभुवः सपर्यां चक्रुः कुर्वन्ति च इति नापोहितं प्रेक्षावताम्। छत्रपतिशिवाजि-लोकमान्य-बालगंगाधरतिलक-गोखले-सावरकर- प्रभृतीनां तपस्याभिरियं पुण्यभूमिः पुण्यदा राजते। सर्वश्रीरामकृष्णगोपालभाण्डारकर- अभ्यंकर-चित्रावशास्त्रि-दत्तोवामनपोतदार-परशुरामकृष्णगोडे- परशुरामलक्ष्मणवैद्य-रामचन्द्रनारायणदाण्डेकरप्रभृतीनां विश्वविश्रुतानां विदुषां कर्मभूमिरियं पुण्यभूमिः।[१]

सङ्गीतकाराणां, नाट्यविशारदानां, फिल्मप्रशिक्षकाणां चेयं कर्मस्थली। अनया पुण्यनगर्या संस्कृतस्याध्यापने, संशोधने, कवने च रता विश्वश्रुता नैके सरस्वतीसुताः समुत्पादिताः। अत्र हि 'शारदा' प्रसीदति। अत्र हि शारदा-गौरव-ग्रन्थमालायां पं. वसन्त गाडगीलेन प्रसिद्धीकृताः शिवराज्योदयादयो नैके ग्रन्था विद्वत्समाजे चर्चाविषयीभूताः सन्ति। अत्रैव 'शतशतकोटिशरत्पर्यन्तं प्रवहताम् संस्कृतमन्दाकिनी' ति गानमाविर्भूतम् यदद्यत्वे सम्पूर्णेऽपि जगति संस्कृतसमारोहेषु संस्कृतप्रणयिभिः सानन्दं गीयते।

अत्र हि सम्पूर्ण-संसारस्य विद्वांसः समागत्य जटिलप्रश्नानामुत्तरं लभन्ते। अत्रैव 'अखिलभारतीयप्राच्यविद्यासम्मेलनस्य' जन्म जातम् यस्याद्यत्वे हीरकजयन्ती मान्यते। अ.भा. प्राच्यविद्यासम्मेलनस्य कार्यालयं स्वक्रोडे दधानं 'भाण्डारकरशोधसंस्थानं' को न जानाति? विद्यावीराणां, युद्धवीराणां, साहित्यसङ्गीतकलामर्मज्ञानां प्रियेयं पुण्यभूमिः। यदापर्यन्तं देशवासिनः समर्थगुरुरामदासं, शिववीरं, लोकमान्यबालगङ्गाधरतिलकं, येरवडावासिनं महात्मानं गान्धिनं स्मरियन्ति तदापर्यन्तमस्या भूमेश्चर्चा काव्येषु भविष्यत्येव।। विदुषां साधनापीठत्वेनापीयं भूमिः संस्कृतसाहित्ये गीयत एव। १९७७ तमेशवीयेऽब्दे प्रकाशितायां 'चारुचरितचर्चायाम्' आचार्यरमेशचन्द्रशुक्लैस्सादरं नूयते इयं पुण्यभूमिरित्थम्प्रकारेण-

**सा पुण्यभूमिबर्हुवन्दनीया सभाजनीया ह्यभिनन्दनीया।**
**विद्योतते पण्डितवृन्दवन्द्यो दाण्डेकरो यत्र सुधीवरेण्यः।।**[२]

अस्यामेव पुण्यभूमौ वयं संस्कृतसाहित्यस्य विगतवर्षत्रयव्यापिन्याः प्रगतियात्रायाः सिंहावलोकनं कर्तुं समेता इति धन्या वयं सर्वे। अहं तु प्रसिद्धामिमामुक्तिं स्मरामि–

**त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।**

**आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥ इति**

प्रेयांसो विद्वांसः,

संस्कृतसहित्यं हि अनन्तपारम्। तस्य साकल्येनाध्ययनमेकेन जनेन एकस्मिन् जन्मनि कर्तुं नैव पार्यते। विश्वस्य मङ्गलार्थं वेदवाणी संस्कृते एवाविर्भूता। निषादविद्धाण्डजदर्शनोत्था आदिकवेर्वाल्मीकेः करुणा 'मा निषादे' तिव्याजेनात्रैव प्रकटिता। देशस्य एकतामखण्डतां च संरक्षितुं मानवतां च पोषयितुं काले काले सहस्रशो हि काव्यनाटकादिरचनाः संस्कृतभाषायां विरचिता विरच्यन्ते च। काव्यं कर्तुं विचारयितुं च ये जानन्ति तेषामत्र महती परम्परा। अस्यामेव परम्परायां साम्प्रतिकाः संस्कृत-रचनाकाराः स्वयोगदानं कुर्वाणा देववाण्याः पुराणतारुण्यं प्रत्यग्रशोभां च सम्यक् ख्यापयन्तोऽस्मादृशां जनानां वन्दनीयतां यान्ति।

## प्रकाशिताः शोध-समीक्षाग्रन्थाः

आलोच्यकाले नैकेषु विश्वविद्यालयेषु तत्तद्भाषामाध्यमेन संस्कृत-साहित्यमवलम्ब्य विविधदृशा रचिताः शोधप्रबन्धाः शोधोपाध्यर्थं स्वीकृताः जाताः। संस्कृत-विश्वविद्यालयेषु संस्कृतमाध्यमेन शोधकार्यं कृतवतां विदुषां नास्ति संख्या न्यूना।

संस्कृतसाहित्य-शोध-समीक्षापरा अनेके ग्रन्थाः प्रकाशिताः जाताः येषु डॉ. छोटेलाल त्रिपाठिनः 'नवमशताब्दीतो द्वादशशताब्दीपर्यन्तं विशिष्टसंस्कृतकाव्येषु सामाजिकव्यवस्थायाः परिशीलनम्'[३], डॉ. नरेन्द्रनाथयादवस्य 'बीसवी शताब्दी के संस्कृत-प्रहसनों का अध्ययन'[४], डॉ. कुमुद टण्डन-महाभागाया 'महात्मा गाँधी परक संस्कृत काव्य'[५], श्री ज्ञानचन्द्रशास्त्रिणः 'ध्वनिविरोधिन आचार्याः'[६], आचार्य कुवेरनाथ शुक्लस्य 'योगवासिष्ठ के राम'[७], डॉ. के.सी. जैनस्य 'Kâlidâsa and

his Times'[८], डॉ. रमेशकुमारपाण्डेयस्य 'भरतमुनि' (साहित्यशास्त्र के आदि आचार्य)[९], सुषमास्नातिकाया 'बृहत्त्रयी और लघुत्रयी पर वैदिक प्रभाव'[१०], डॉ. कु.एस.के. शर्ममहाभागाया: 'Haravijaya of Ratnâkara (A criticism)'[11], डॉ. तपस्वीनन्दिन: 'हैमवाङ्मयविमर्श:'[१२], डॉ. आशा सर्वटे-महाभागाया: 'डॉ. वेङ्कटराघवन् के नाट्य और काव्य का अनुशीलन'[१३], प्रभाकरदीक्षितस्य 'वाल्मीकिरामायण में राजनीतिक विचार'[१४], रकामान्तशुक्लस्य 'अर्वाचीनसंस्कृतसाहित्यपरिचय: (द्वितीय खण्ड:)'[१५], डॉ. कृष्णकुमारस्य 'मेघदूतानुशीलनम्'[१६], प्रो. सत्यव्रतशास्त्रिण: 'Kâlidâsa in Mordern Sanskrit Literature'[17], डॉ. गिरधारीलालचतुर्वेदस्य 'Revisiting 'Sakuntalam (A commentary on Goethe's Sakuntalam Epigram)'[18], डॉ. चन्द्रकान्तशुक्लस्य 'संस्कृत के दार्शनिक नाटकों का संविधानक तत्त्व'[१९], डॉ. कृष्णाशर्मा-महाभागाया: 'दृष्टान्तकलिकाशतकम् : एक समीक्षात्मक अनुशीलन'[२०], डॉ. सी. राजेन्द्रन्महाभागस्य 'A Study of Mahimabhatta's Vyaktiviveka'[21], डॉ. लता सिंहल महाभागाया 'भारतीय संस्कृति में नारी'[२२], डॉ. निर्मल त्रिखाया: 'Faiths and beliefs in the Kathâsaritsâgara'[23], मधुसूदनपते: 'Sanskrit Drama, Essays in Revaluation'[24], पं. रामनारायणमिश्रस्य 'श्रीमद्भागवत-गीतों का शास्त्रीय अनुशीलन'[२५], कु. बेला हाण्डाया: 'प्रोफेसर रसिक बिहारी जोशी द्वारा प्रणीत 'मोहभङ्गम्' महाकाव्य (एक परिशीलन)'[२६], इत्यादयो ग्रन्था: विपश्चितां शोध-समीक्षा-शेमुषीं द्योतयन्तो विलोक्यन्ते।

आचार्यपण्डितआद्याचरणझा-महाभागै: 'भारतीयवाङ्मयेषु रामकथावर्णनम्,[२७] इत्येद्ग्रन्थमालायां द्वितीयखण्डं प्रणीतम् यत्र कम्बरामायणस्य संस्कृतगद्यमयं रूपान्तरणं कृतम् किंच रघुवंश-महावीरचरित-उत्तररामचरित-अनर्घराघव-कुन्दमालानाटकेतिपंच-कृतीनां संक्षिप्तसंस्कृतगद्यानुवाद: समीक्षासहित: प्रस्तुत:। अस्य ग्रन्थस्य प्राग्वाचिकं तत्कालीनभारतोपराष्ट्रपतिना (अद्यत्वे च भारतस्य महामहिमराष्ट्रपतिना) डॉ. शंकरदयालशर्मणा लिखितम्। सरलसंस्कृतनिबद्धोऽयं ग्रन्थ: एकत्रैव

नैकेषां ग्रन्थानां सारं दधाति। तमिलभाषायाः कृतेः संस्कृतानुवादेन झामहाभागेन एकोऽरुन्तुदोऽभावः पूरितः।

डॉ. नगेन्द्र सम्पादिते 'भारतीय महाकाव्य'[२८], इति ग्रन्थे लेखचतुष्टयं रामायणं,[२९] महाभारतं,[३०] रघुवंशं[३१] नैषधीयचरितं[३२] चाधारीकृत्य प्रकाशितम्।

## अप्रकाशिताः शोधप्रबन्धाः

राष्ट्रियसंस्कृतसंस्थानस्य विविधेषु विद्यापीठेषु संस्कृत-भाषामाध्यमेन विद्यावाचस्पति (पीएच.डी.) शोधोपाधिं शतशः शोधार्थिनो लब्धवन्तः। द्विनवत्युत्तरैकोनविंशतिशततमेशवीयेऽब्दे जनवरीमासस्य द्वितीयस्यास्तारिकाया २.१.१९९२ अनन्तरं यैः शोधकर्तृभिः शोधोपाधिर्लब्धस्तेषां संक्षेपतोऽत्र चर्चां करोमि। सर्वश्रीवरप्रसादमूर्तिना 'रसिकरञ्जनीसंज्ञिकायाः कुवलयानन्दटीकायाः पाठसमीक्षात्मकं सम्पादनम्' इति, सुनीलकुमारशुक्लेन 'श्रीपाद- शास्त्रिहसूरकरकृतचारित्रिकग्रन्थानां विश्लेषणात्मकमध्यनम्' इति, श्रीमत्या सुधारानीमहाभागया 'परिमलपद्मगुप्तविरचितस्य नवसाहसाङ्कचरितस्य सांस्कृतिकमध्ययनम्' इति, कु. सरितया 'संस्कृतरामकाव्येषु श्रीहनुमच्चरितस्य तुलनात्मकमध्ययनम्' इति, कु. आरती अग्रवाल- महाभागया 'विश्वनाथ-विद्यानाथविद्याधरीयकाव्यशास्त्रग्रन्थानां तुलनात्मकमध्यनम्' इति, रामकुमारझामहाभागेन 'महाभारते राजनीतितत्त्वविमर्शः' इति, श्रीरथेन 'श्रीमद्भागवतस्य शैक्षणिकानुशीलनम्' इति, श्रीमत्या सी. शान्तया 'केरलीयकविभी रचितानां संस्कृतबालकाव्यानां समीक्षापूर्वकं वासुदेवविरचितस्य श्रीगोविन्दचरितस्य समालोचनात्मकं सम्पादनमध्ययनं च' इति, क्षेमराजबरोलामहाभागेन 'चतुर्भाण्यां परिहास-व्यङ्ग्यानां परिशीलनम्' इति, के. साम्बशिवमूर्तिना 'उदण्डकविविरचितस्य मल्लिका - मारुतप्रकरणस्य पाठसमीक्षात्मकमध्ययनम्' इति, पी. शङ्करराजेन वामनभट्टबाणकृत- वेमभूपालचरितस्य विमर्शनात्मकमध्ययनम्' इति, ई. पी. श्रीदेव्या 'केरलीयकुड्डियाट्टनाट्यकलायाः समालोचनात्मकमध्ययनम्' इति, श्रीमत्या एन.के. लालनमहाभागया 'अलङ्कारसर्वस्वचित्रमीमां-सयोस्तुलनात्मकमध्ययनम्' इति, जितेन्द्रकुमार अग्रवालेन 'श्रीलक्ष्मण-

माणिक्यदेवविरचितविख्यातविनयनाटकस्य सम्पादनं समीक्षणं चे'ति, कृष्णाकान्तपाण्डेयेन 'संस्कृतसाहित्ये भरतः' इति, कु. मञ्जुश्रीवास्तवया 'संस्कृतवाङ्मये नारदचरितस्य क्रमिकविकासः' इति, के.पी. केशवन्महाभागेन 'श्रीविश्वेश्वरपण्डितविरचितस्यालङ्काकौस्तुभस्य समीक्षात्मकमध्ययनम्' इति, श्रीमत्या कामाक्षीशर्ममहाभागया 'कुवलयानन्दचित्रमीमांसयोस्तुलनात्मकमध्ययनम्' इति, विजयकुमार शर्मणा 'काव्यप्रकाशविस्तारिकायाः समीक्षात्मकमध्ययनम्' इति, कु. रीता श्रीवास्तवमहाभागया 'भासकृतनाटकानां भाषावैज्ञानिकमध्ययनम्' इति, घूरनझामहाभागेन 'अलङ्काराणां विषये मम्मटजगन्नाथयोः मतविमर्शः' इति, विजयालङ्कारओझामहाभागेन, 'रुक्मिणीविजयमहाकाव्यस्य समीक्षात्मकमध्ययन्' इति, राजकुमारमिश्रेण 'शब्दशक्तीनां काव्यशास्त्रीयसमीक्षात्मकमध्ययनम्' इति, रामकुमरदाधीचेन 'श्रीनिवासशास्त्रिण उपन्यासेषु युगचेतना' इति, भूदेवप्रसादवर्मणा 'भिक्षाटनकाव्यस्य समालोचनात्मकमध्ययन्' इति, श्रीमत्या कञ्चनश्रीवास्तवमहाभागया 'आनन्दराम-विरचितस्य विद्यापरिणयनाटकस्य आलोचनात्मकमध्ययनम्' इति, चन्द्रशेखरेण 'पण्डितराजकाव्यसंग्रहस्य साहित्यिकं परिशीलनम्' इति, सत्यनारायण आचार्येण 'ध्वन्यालोकलोचनव्याख्यानभूताया अञ्जनी-टीकायाः समीक्षात्मकं सम्पादनम्' इति, कु. दीपावर्ममहाभागया 'द्वादशशताब्दीय संस्कृतनाटकेषु साहित्यलोकजीवनस्य चित्रणम्' इति, कु. ममता गुप्तया 'कुन्तकस्य वक्रोक्तिदिशा बृहत्त्रय्याः सविमर्शविवेचनम्' इति, कृष्णकुमारत्रिपाठिना 'अश्वघोषस्य कृतीनां दार्शनिकमध्ययनम्' इति, गदाधरहोत्रा 'हरिभक्तिविलासस्य समीक्षात्मकमध्ययनम्' इति, श्रीप्रकाश रायेण' रतिमन्मथनाटकस्य समीक्षात्मकमध्ययनम्' इति, सप्ताद्रिमिश्रेण 'भवभूतिहर्षयोर्नाट्यकृतिषु देवतत्त्वम्' इति, कृष्णदेवभार्गवेण 'संस्कृतसाहित्ये कविशिक्षापरम्परा, तस्यां राजशेखरस्य योगदानम्' इति, श्रीमत्या आराधनाश्रीवास्तवया 'अमरुशतकं तट्टीकायाश्च साहित्यिकं सांस्कृतिकञ्चाध्ययनम्' इति, कुञ्जबिहारीपण्ड्यामहाभागेन च

'श्रीवाग्वरक्षेत्रस्य संस्कृतसाहित्याय योगदान'मिति विषयवलम्ब्य शोधोपाधिर्लब्धः।[३३]

## अभिनन्दनग्रन्थाः

आलोच्यकाले संस्कृतसपर्यापराणा नैकेषां विदुषां रचनाकर्तॄणां च अभिनन्दनग्रन्था अपि प्राकाश्यं गता यत्र तेषां व्यक्तित्वस्य समुन्मीलनेन साकं तत्तद्विषयेषु वैदुष्यपरा लेखा अपि मुद्रिता जाताः। एषु लेखेष्नु नैके साहित्यिकसंस्कृतमवलम्ब्यापि निबन्धास्सन्ति। डॉ. प्रभाकरनारायण कवठेकराभिनन्दनग्रन्थः 'प्रभाकरनारायणश्रीः'[३४] इति शीर्षकेण सद्य एव प्रकाशितोऽस्ति यत्र त्रिषु खण्डेषु द्वानवतिशीर्षकेषु या सामग्री सङ्कलिता तत्र कालिदासमवलम्ब्य लेखत्रयं प्रकाशितम्। कुलपति-श्रीधरवासुदेवसोहोनी-महोदयेन 'Dusynta's attempted Bluff'[35] इत्यस्मिन्नालेखे अभिज्ञानशाकुन्तले शकुन्तलायाः सख्योः पुरतः दुष्यन्तस्य व्याहारं व्यवहारञ्चालम्ब्य विचारः कृतः। डॉ. सत्यपालनारंगमहाभागेन 'Kâlidâsa's Parallels'[36] इत्यस्मिन्निबन्धे कालिदासस्य पूर्वसूरीणां, समकालीनानां परवर्तिनाञ्च कवीनां शोधपूर्णा चर्चा विहिता। डॉ. गौतमपटेलमहाभागेन 'Gita and Kalidasa'[37] इत्यत्र गीतायाः कालिदासोपरि प्रभावो विमृष्टः। अस्मिन्नेवाभिनन्दनग्रन्थे डॉ. सुषमाकुलश्रेष्ठमहाभागया 'Music in the Buddhacarita of Asvaghosa'[38] इतिशीर्षके शोधपत्रे अश्वघोषस्य बुद्धचरितमहाकाव्ये सङ्गीततत्त्वमन्विष्टम्। प्रो. आर.एन. सम्पतमहाभागेन 'Subhasitanivi of Vedantadesika : An Appraisal'[39] इत्यस्मिंलेखे वेदान्तदेशिकस्य 'सुभाषितनीवी'मवलम्ब्य विचारितम्। 'अभिराज' डॉ. राजेन्द्रमिश्रमहाभागेन 'Modern Sanskrit Poetry'[40] इत्येतच्छीर्षके शोधपत्रे आधुनिकसंस्कृतकवितायाः भावतत्त्वं स्वरूपरचनां चावलम्ब्य महत्त्वपूर्णा विचाराः प्रदत्ताः।

अस्मिन्नेव ग्रन्थे डॉ. जयमन्तमिश्रस्य 'काव्यश्रवणात्परं रसनिष्पत्तिपर्यन्तं समपेक्षितकालस्य विमर्शः'[४१], डॉ. वी.एम. कुलकर्णी महाभागस्य च 'Professor Kangle's emendation of Abhinavabharati Chapter

XVIII'[42] इत्येतच्छीर्षकौ लेखौ काव्यशास्त्रीयसमीक्षापरौ स्तः। प्रो. सत्यव्रतशास्त्रिभिः ग्रन्थस्यादौ 'Foreword' रूपेण ग्रन्थमवलम्ब्य स्वविचाराः प्रदत्ताः सन्ति, डॉ. रामकरणशर्मणा च 'प्ररोचना' लिखिता।

डॉ. सत्यव्रतशास्त्रिमहाभागानामभिनन्दनग्रन्थः 'सत्यसुधा'[४३] शीर्षकेण प्रकाशितः। अस्मिन् शास्त्रिमहाभागानां व्यक्तित्वं कर्तृत्वं चावलम्ब्य सप्रमाणं विस्तृता चर्चा कृतास्ति। ग्रन्थकारः डॉ. सत्यव्रतवर्मा आंग्लभाषामाध्यमेन डॉ. सत्यव्रतशास्त्रिकृतान् 'बोधिसत्त्वचरित', 'श्रीगुरुगोविन्दसिंहचरित'- 'थाईदेशविलास'-'श्रीरामकीर्तिमहाकाव्य' प्रभृतीन् ग्रन्थान्, स्फुट-कविताः पत्रकाव्यानि च परिशीलयन् संस्कृतस्य नवरचनाभिः पाठकान् परिचाययति। अयं ग्रन्थः 'डी. लिट्.', शोधोपाधिं लब्धवान्।

कुलपतिश्रीधरवासुदेवसोहोनीमहाभागानामभिनन्दनग्रन्थः 'कालिदास श्रीधरी'[४४] इत्येतच्छीर्षकेण 'Erotics in Kalidasa' इत्येतद्ग्रन्थमालायाः प्रथमपुष्पत्वेन प्रकाशितोऽस्ति यत्र नायक- नायिका- गुणालङ्कार- विवेचनपरका सामग्री प्राधान्येन सङ्कलिता। कालिदासकृतिषु कामकलामन्विष्यमाणैर्लेखकैर्नायकानामष्टौ सात्त्विकगुणान्, नायिकानां त्रयस्त्रिंशतमलङ्कारान्, नायकानां सप्तदश अलङ्कारांश्चावलम्ब्य विचारः कृतः।

भवतां पुरतोऽभिभाषमाणममुं जनं (रमाकान्तशुक्लम्) अनुग्रहीतुम् डॉ. राजेन्द्रमिश्रमहाभागस्य प्रधानसम्पादकत्वे 'देववाणी-सुवासः'[४५] इत्येतच्छीर्षको- ऽभिनन्दनग्रन्थः प्रकाशितोऽस्ति। पञ्चप्रसरात्मकस्यास्य ग्रन्थस्य खण्डद्वये प्रकाशनं जातम् यत्र संस्कृतसाहित्यस्य विविधान् पक्षानवलम्ब्य जनममुञ्चावलम्ब्य हिन्दी-संस्कृतांग्लभाषामाध्यमेन एकत्रिंशदुत्तरद्विशत- संख्याकैर्विद्वद्भिर्गद्यपद्यात्मिका सामग्री प्रदत्ता। तृतीये प्रसरे सर्वश्री- आचार्यरामकिशोरशर्म-प्रभुदयालु अग्निहोत्री-उमारमणझा- कामताप्रसादत्रिपाठि- बाबूराम अवस्थि-शम्भुनाथ आचार्य- कविपुण्डरीकसम्पूर्णदत्तमिश्र- वासुदेवकृष्णचतुर्वेद- प्रभाकरनारायण कवठेकर-रामकरणशर्म-जयदेवजानी 'रसराज'-टी.वी. परमेश्वर अय्यर-दीपकघोष-लीनारस्तोगी-'कविरत्न' ओमप्रकाशठाकुर-जनार्दन

प्रसादपाण्डेय 'मणि'-श्री. सुन्दरराज-बदनीनाथ कल्ला - राधावल्लभ - सौ. कमल अभ्यंकर - हर्षदेवामाधव - देवदत्तभट्टि - प्रेमनारायणद्विवेद श्रीधरभास्करवर्णेकराणामस्य च जनस्य काश्चित् कविताः सङ्कलिताः। चतुर्थे प्रसरे डॉ. सावित्रीशर्ममहाभागायाः 'देवभाषा संस्कृतम्', डॉ. मुहम्मद इएराइल खान-महाभागस्य The Impact of Puranas on Hinduism,[48] डॉ. गंगाधर पंडा-महाभागस्य 'साहित्यस्य शास्त्रत्वविचारः'[४९], आचार्य पण्डित आद्याचरणझा-महाभागस्य 'साहित्ये सत्यं शिवं सुन्दरम् : एकमनुशीलनम्'[५०], पंडितचन्द्रदीपशुक्लस्य 'संस्कृत साहित्य में राष्ट्रीय चेतना'[५१], प्रो. ई.पी. भरत पिषारटि-महाभागस्य 'कालिदासस्य कलावैशिष्ट्यम्'[५२], डॉ. गिरधारीलालचतुर्वेदस्य 'Kalidasa as an Art Critic'[53], डॉ. प्रकाशपाण्डेमहाभागस्य 'Sa Vartate Samprati'[54], डॉ. एन.पी. उन्निमहाभागस्य 'Nagananda: A General Introduction'[55], डॉ. करुणेशशुक्लस्य 'Mordern Indian Attitude towards Sanskrit Literary Tradition'[56], डॉ. खगेन्द्र पात्रस्य 'महामहोपाध्याय-गोविन्दमिश्रविरचितं गौरकृष्णोदयमहाकाव्यम्'[५७], आचार्यश्रीनिवासरथस्य 'अतिद्वयी कथा'[५८], प्रो. श्रीधरवासुदेवसोहोनी- महाभागस्य 'Sthavaraka Ceta'[59], डॉ. लम्बी शुक्लायाः 'कालिदास का तत्त्व चिन्तन'[६०] इत्यादयो लेखा साहित्यिकसंस्कृतं साहित्यशास्त्रं च सम्यक् स्पृशन्तो नूनमेव शोधकर्तॄन् आवर्जयितुम् क्षमाः।

'देववाणी-सुवास'स्य पञ्चमप्रसरात्मको द्वितीयः खण्डः विंशशताब्दीयस्य संस्कृतसाहित्यस्य विस्तृतं परिचयं ददाति। त्रिनवतिलेखेषु विंशशताब्द्यां प्रकाशितानां संस्कृतमहाकाव्याना[६१] शतककाव्याना[६२], दूतकाव्याना[६३], समस्यापूर्तिकाव्याना[६४], स्तोत्रकाव्याना[६५], चित्रकाव्याना[६६], कथाकाव्याना[६७], नाटकाना[६८], पत्रपत्रिकाणां[६९], मुक्तकाना[७०], हास्यव्यङ्ग्यकाव्यानां,[७१] काव्यशास्त्रीयग्रन्थानां,[७२] प्रशस्तिकाव्यानामन्येषाञ्च[७३] काव्यरूपाणां[७४] विषये इदम्प्रथमतया प्रभूता सामग्री एकत्र प्रस्तुता। अनेकेषां काव्यानां काव्यप्रवृत्तीनां च समीक्षापि कृता विद्वद्भिः[७५]। अनेकैः रचनाकारैः स्वकाव्ययात्रामवलम्ब्य लिखितम्। भारतस्य विविधेषु प्रदेशेषु विदशेषु च स्थितैर्विद्वद्भिः रचनाकारैश्च

संस्कृतं प्रति यद् योगदानं कृतं तस्यापि चर्चात्र कृतास्ति[७७]। अद्यतनसंस्कृतकवीनां विषये यान्याभाणकान्ति प्रसिद्धानि तेषामपि चर्चा कृतास्ति। देववाणी-परिषदादिसंस्थाभिः प्रकाशितस्य संस्कृत-साहित्यस्य परिज्ञानमपि कारयति 'देववाणी-सुवासः'[७८]। कस्यचिज्जनस्य अभिनन्दनं तु वस्तुतो व्याजमेव भवति सारस्वत-चर्चां विधातुम्। एतादृशैः प्रयत्नैः साहित्यमवलम्ब्य या चर्चा भवति तस्या एव प्राधान्यं भवति।

डॉ. रामकरणशर्मणां,[७९] डॉ. एस.जी. काण्टावालामहाभागानां,[८०] डॉ. अशोकचटर्जी-शास्त्रिणामाचार्यश्रीनिवासरथमहाभागानां[८१] चाप्यभिनन्दनग्रन्थाः प्रकाशनाधीना विद्यन्ते यत्र महाभारतं, पुराणसाहित्यमन्यांश्च विषयानधिकृत्य सामग्री संकल्पितास्ति।

स्मृतिग्रन्थेष्वपि संस्कृतसाहित्यमवलम्ब्य प्रसक्त्यानुप्रसक्त्या चर्चा सञ्जाता। डॉ. मल्लेदेवरु-स्मृतिग्रन्थे' डॉ. अशोकचटर्जीशास्त्रिणां 'Neo Poesy in Sanskrit'[82] इतिशीर्षको लेखः प्रकाशितोऽस्ति यत्र संस्कृत-काव्ये आधुनिकतामवलम्ब्य केचित्प्रश्नाः समुत्थापिताः सन्ति। आशासे, अस्यां दिशि विदुषामन्येऽपि विचाराः समागमिष्यन्ति।

## रचनात्मकसाहित्यम् : नाटकानि

नाटकानां द्व्शायमालोच्यकालः नैजां समृद्धिं सूचयति। डॉ. रामकिशोरमिश्रस्य 'देवयानी'[८३] नाटिका, श्री वासुदेव आचार्यस्य 'मधुलिप्सा'[८४], श्री.भि. वेलणकरस्य 'मेघदूतान्वितम् (गीतनृत्यनाट्यम्)'[८५], 'अभिराज', डॉ. राजेन्द्रमिश्रस्य 'दिल्लीपरिदेवनम्'[८६] एतत्पंक्तिलेखकस्य 'नाट्यसप्तकम्'[८७] इत्येतदादिका नाट्यकृतयः प्रकाशं गताः। डॉ. इच्छारामद्विवेदप्रणवस्य 'सत्प्रेरणा'[८८] नाटिका प्रकाशनाधीना विद्यते। एतासु रचनास्वाधिकांशानां प्रयोगा अपि सञ्जाताः। इमा नाट्यकृतयः पुरातनकथानकानि गृह्णत्योऽपि स्वयुगं नैवोपेक्षन्ते। अवश्यं ता वर्तमानयुगायापि कान्तासम्मिततयोपदेशं दातुं प्रयतन्ते।

डॉ. गौरीनाथमिश्र 'भास्करस्य' 'गुरुदक्षिणानाटकम्'[८९] सप्तांकेषु कौत्स-वरतन्तु-प्रसङ्गमुपस्थापयति। श्रीरामकृष्णशर्मणः 'नाट्यत्रयी'[९०] त्रयाणां

नाटकानां संकलनमस्ति यत्र शाकुन्तलकथा-कर्णवृत्तान्तादेर्नवीनदृशा प्रस्तुतिर्जाता।

डॉ. वनेश्वरपाठकप्रणीता 'चाण्डालिका'[९१] विश्वकविरवीन्द्रनाथ ठाकुरकृत-चाण्डालिकायाः संस्कृतनाट्यरूपान्तरं विद्यते। अस्य प्रथमं संस्करणं १९८१ तमेशवीयेऽब्दे प्रकाशितमसीत्। इदानीं द्वितीयं संस्करणं प्रकाशितम्। डॉ. पाठकस्यैव 'विक्रान्तकर्णम्'[९२] कर्णस्य चरितमवलम्ब्य कृतं नाटकमस्ति यस्य सन्देशोऽस्ति–**'जातिर्नैव हि पूज्यते सुमतिभिर्व्यक्तिः सदा पूज्यते।'**

## महाकाव्यानि

नैककाव्यकर्तृभिः डॉ.सत्यव्रतशास्त्रिभिः १९८९ एकोननवत्युत्तरैकोन-विंशतितमेशवीयेऽब्दे गुरुपूर्णिमायां थाइलैण्डे प्रसिद्धस्य श्रीरामकीर्तिकथान-कस्येदम्प्रथमतया कृतं 'संस्कृतरूपान्तरणं' सम्पूर्णतामानीतम्। तदेव 'श्रीरामकीर्तिमहाकाव्यम्'[९३] इति नाम्ना १९९० तमेशवीयेऽब्दे बैंकाकतः प्रकाशितं जातम्। थाइरामकथामाश्रित्य प्रणीतमिदं संस्कृत महाकाव्यं सदुक्तीनां निधानं वर्तते। स्थाने स्थाने पूर्वकवीनां वाक्यांशाः कविवाचि पदं निदधते। इत्थं च वाल्मीकिकालिदासादीनां वचांसि पुनरुद्धृतानि काव्ये कामपि नूतनामेव विच्छित्तिं सन्दर्भगर्भकतां च पुष्णन्ति। दिङ्मात्रमुदाह्रियते असुरफद्वाक्यं चिरात्प्रत्यभिज्ञातं स्वपितरं हनुमन्तं प्रति–

**'अद्य क्रियाः कामदुघा क्रतूनां सत्याशिषः सम्प्रति भूमिदेवाः'**
**चिराय यद्दर्शनमीप्सितं मे स एव साक्षात्पुरतो ममास्ति।।**
**ममेष्टदेवोऽसि पिता मम त्वं मनोरथानामतटप्रपातः।**
**त्वद्दर्शनेनैव कृती तथापि गुर्वत्र कार्यं प्रतिपादयामि।।**[९४]

इदं महाकाव्यमवलम्ब्य 'सत्यसुधा' शीर्षके ग्रन्थे डॉ. सत्यव्रतवर्मणा विस्तरशश्चर्चा विहितास्ति। जिज्ञासुभिरेष ग्रन्थोऽवलोकनीयः। मदीयं सौभाग्यमिदं यन्मया साक्षात्कविमुखादस्य महाकाव्यस्याधिकांशः श्रुतः।

डॉ.गोस्वामिबलभद्रप्रसादशास्त्रिण: सद्य: प्रकाशितं चतुर्दशसर्गात्मकं 'दूताञ्जनेयम्'[९५] नाम महाकाव्यं श्रीहनूमतो दौत्यकर्माधारीकृत्य विरचितमस्ति। विविधवर्णनानि, सूक्तिविधानम्, वीराद्भुतरसयोजना, छन्दोविधानम्-इत्येतसर्वमेव अत्र महाकाव्ये दृश्यम्। महाकाव्यमिदमवलम्ब्य डॉ. कृष्णकान्तशुक्लेन विस्तृता भूमिका लिखितास्ति या अध्येतॄणां कृते नूनमुपकारिणी वरीवर्ति।

डॉ. हरिनारायणदीक्षितप्रणीतं 'भीष्मचरितं'[९६] नाम महाकाव्यं विंशति सर्गेषु पारम्परिकवृत्तैर्निबद्धमस्ति। अस्मिन् महाकाव्ये भीष्मस्य जीवनचरितं कविना निबद्धम्। सुविदितमेव विदुषां यदनेन महाकविना इत: पूर्वं नैका रचना: प्रणीता:। किञ्चास्य 'संस्कृत साहित्य में राष्ट्रिय भावना' इत्याख्य: डी. लिट्. शोधप्रबन्ध: राष्ट्रप्रेमाणमस्य व्यनक्ति। भीष्मचरितस्य प्रथमसर्गत एवास्य राष्ट्रभक्तिर्व्यक्तीभवति-

**सुरासुराणामपि वन्द्यतां गतं मखाग्निधूमेन सदा सुगन्धितम्।**
**रतं च पुण्येषु मनुष्यतावृतं विशालराष्ट्रं मम भाति भारतम्।।**

अत: परं कथावतारं कुर्वन् कवि: हस्तिनापुरनृपते: शान्तनो: राज्य-व्यवस्थां वर्णयति। मन्ये एतद्वर्णनेन सोऽद्यापि तादृशीमेव व्यवस्थां वाञ्छति। कीदृशीयं व्यवस्था, दृश्यताम्-

**न कोऽपि दुःखी न च कोऽपि पीडितो**
**न निर्धनो नैव च जीविकां विना।**
**न कश्चिदातङ्कित एव मानवो**
**नयेन शौर्येण च तस्य शासने।।**
**अशिक्षितो नापि च कोऽपि भिक्षुको**
**न कोऽपि चोरो न च कोऽपि वञ्चक:।**
**न वा निराशो न हि कोऽपि लुण्ठको**
**बभूव देशे सति शान्तनौ नृपे।।**
**अकारि नोत्कोचकथापि केनचित् स्वकार्यकार्ये नृपकर्मचारिण**
**न मन्त्रणा पीडयितुं च सज्जनं न दैयपूर्ता गुणिवञ्चना क्वचित्।।**

**न जातिवादो न च वर्गभावना व वोच्चनीचादिविभेदवेदना।**
**बभूव नातङ्किजनस्य वन्दना महीयसी शान्तनुनीतिदेशना॥**
**निजे निजे कर्मणि सर्वमान्वाः तदा प्रवृत्ता अभवन्मुदान्विताः।**
**समस्तदेशे धनधान्यसम्पदो निरन्तरं चात्र विकासमाययुः॥**[९९]

कविना अलंकृतशैल्यामपि सर्वत्र प्रसादगुणस्य निर्वाहः कृतः। किञ्च महाभारतस्य विश्रुतचरित्रस्य भीष्मस्य वर्णनव्याजेन स्वयुगस्य समस्यानां समाधानार्थमपि दिशो दर्शिताः। महाकाव्यमिदं साहित्य-अकादम्या पुरस्कृतम्।

मया द्वादशर्षाणि पूर्वम् अर्वाचीनसंस्कृतस्य तृतीयवर्षीये चतुर्थेऽङ्के 'निर्माणाधीनं महाकाव्यं श्रीनेहरूचरितम्'[१००] इतिशीर्षकलेखकमाध्यमेन कविरत्नश्रीअमीरचन्द्रशास्त्रिभिः द्वासप्ततिसर्गेषु चिकीर्षितस्य यस्य महाकाव्यस्य विषये संक्षिप्ता सूचना प्रदत्तासीत्तस्य[१०१] नवत्युत्तरैकोनविंशतितमेशवीयेऽब्दे (१९९०) 'श्रीनेहरूचरितमहाकाव्य' शीर्षकेण प्रकाशनं संवृत्तम्। इदं हि महाकाव्यं पण्डितजवाहरलालनेहरोः 'मेरी कहानी' ति आत्मकथायाः संस्कृतकाव्यानुवादः। अस्मिन् महाकाव्ये 'कविशिरोमणिना' श्री अमीरचन्द्रशास्त्रिणा द्वात्रिंशच्छन्दसां प्रयोगः कृतः। श्रीनेहरोरात्मकथायाः संस्कृतगद्यानुवाद इतः पूर्वं स्व. कमलापतिमिश्रेण कृत आसीत्। इदानीं श्रीनेहरूचरितमहाकाव्यस्य प्रकाशमेन तस्याः पद्यानुवादोऽपि सुलभो जातः।

डॉ. इन्द्रदेवद्विवेदिनः 'सुदामचरितम्'[१०२] नाम महाकाव्यम् एकविंशति सर्गेषु सुदामचरितं वर्णयति।

श्रीकृष्णदत्तशर्मणा 'शिववीरचरितं'[१०३] नाम विंशतिसर्गात्मकं महाकाव्यं सद्य एव प्रकाशितम्। 'मान्या मही' तिनाम्नि प्रथमसर्गे कविर्देशे देशभक्तान् सुवीरान् कांक्षति–

**सुरवरमुनिवन्द्या भारतीया धरित्री**
**जलधिजलतरंगैर्धौतपादा पवित्रा।**
**विविधफलसुधान्यैः सुप्रेदेशैः प्रपूर्णा**
**जनयतु जननी सा देशभक्तान् सुवीरान्॥** (१/१) पृ. ५

'सनातन' काश्यपरेवाप्रसादद्विवेदप्रणीतं 'स्वराज्यसम्भवम्'[१०४] नाम महाकाव्यं भारतस्य स्वातन्त्र्यावाप्तिं किंच तदुत्तरं देशस्य व्यवस्थां चित्रयति। अस्मिन् महाकाव्ये वर्तमानकेन्द्रीयशासनपर्यन्तं घटना: काव्यात्मकदृशा महाकविना उपनिबद्धा: सन्ति।

अस्मिन्नेव पुण्यपत्तने २६.२.१९९२ तारिकायां स्वातन्त्र्यवीरसावरकर पुण्यतिथौ कविकेदार-गंगाधरविष्णुठेकेदारकृता 'स्वातन्त्र्यवीरगाथा'[१०५] प्रकाशिता जाता यत्र द्वादशपर्वसु स्वातन्त्र्यवीरविनायकदामोदरसावरकरस्यय जीवनगाथा निबद्धा।

कविकेदार-गंगाधरविष्णुठेकेदाराभ्यां प्रणीतं 'महात्मायनम्'[१०६] महात्मगान्धियो जीवनगाथां चतुर्दशाध्यायेषु १९६८ श्लोकेषु प्रस्तौति।

## खण्डकाव्यानि, शतककाव्यानि, दूतकाव्यानि

वेलूरिसुब्बारावुशर्मण: 'सुन्दरीमेघसन्देश:'[१०७] षट्सर्गात्मकं खण्डकाव्यमस्ति। रामचन्द्रमिश्रस्य 'तरुकथा'[१०८] वृक्षानधिकृत्य कृतं काव्यं वर्तते। रामचन्द्र (हरिशरण) शाण्डिल्यस्य 'कामदूतम्'[१०९] मर्मस्पर्शि खण्डकाव्यमस्ति यदविभाजितभारतस्य रामणीयकं सिन्धप्रदेशसम्बन्धीनि कवे: संस्मरणानि च प्रस्तौति। जानकीनाम्नी नायिका स्व दयितं रामचन्द्रमन्वेष्टुं तस्मै सन्देशं च दातुं कामं चरत्वेन दूतत्वेन च वृणोति। विभाजनकालीनविभीषिकाया अस्मिन् काव्ये हृदयस्पर्शि वर्णनं कृतं कविना।

डॉ. जगन्नाथपाठकस्य 'विच्छित्तिवातायनी'[११०] विच्छित्तिवातायनी, श्रीकृष्णभावनाशतकम्, रामत्वशतकम्, कविताशतकम्, स्त्रीशतकम्, सौन्दर्यकारिका चेति षट्शतकानां संकलनं विद्यते। कवे: प्रियं छन्द आर्याऽत्रापि प्रधान्यं भजते। असय काव्यस्य प्रत्येकं पद्यं मुक्तकमस्ति यत्र सुभाषितच्छटा सुतरां विलोकयितुं शक्यते। स्त्रीशतके स्त्रीपुरुषयोरन्योन्यापेक्षितां वर्णयन् कविर्भणति–

**पुरुष: स्त्रिया विभाति स्त्री च विभातीह किमपि पुरुषेण।**
**उभयोरपि सामान्यो भूषणभूष्याख्यसम्बन्ध:॥**[१११]

कविताशतके कविः काव्यचिन्तनं करोति। इतः पूर्व कवितामवलम्ब्य डॉ. रेवाप्रसादद्विवेद-'अभिराज' राजेन्द्रमिश्र-उमाकान्तशुक्लादिभिरपि कवितामाध्यमेन चिन्तनं, कृतम्। जगन्नाथपाठकस्य काव्यचिन्तनमस्यां परम्परायां नूतनोपलब्धिरस्ति। स्थालीपुलाकन्यायेन कवेश्चिन्तनं प्रस्तूयते–

**निर्माणार्थमनेकेष्वप्युद्यत्वेऽपि प्रवर्तमानेषु।**
**रमणीयार्थविलसिता कस्याप्युत्पद्यते कविता॥**
**स्फटिक इवातिस्वच्छे सुविशाले शुचितमे भृशं स्निग्धे।**
**दर्पण इव कविहृदये कविता झटिति स्फुटीभवति॥**
**उल्लासयति न चेतः कर्णाभ्यन्तर्गतेव या झटिति।**
**या काचिदपि भवेत्सा कविता नास्त्येव नास्त्येव॥**
**भाषन्ते बहुबहवः सुविशाले जगति ते कविम्मन्याः।**
**विलसति परमिह वदने कविता धन्यस्य कस्यापि॥**

क्षीरोदचन्द्रदाशस्य 'तारुण्यशतकम्'[११२] (उडियाभाषानुवादसहितं) तारुण्यसम्बन्धिनो विषयानवलम्ब्य रचितानां शृंगाररसप्रधानानां संकलनमस्ति। 'यौवनदेवता' मधिकृत्य कविर्भणति–

**बालानां नवजीवनोत्सुकयुतामुन्मादिनी चन्द्रिका**
**कान्ता कोमलकान्तिकौतुककला-मञ्जूषिकोद्घाटिका।**
**योषाजीवनदीपिका कुलवधूसम्भोगसम्वर्धिका**
**जीयाद् यौवनदेवता तनुभृतामानन्दसम्वाहिका॥**[११३]

काव्यान्ते कविर्मधुरकामनामित्थं करोति–

**गुञ्जन् गुञ्जन् कुसुमरसिको मञ्जरीं यातु यातु**
**कर्णे कर्णे मधुरमुरली माधुरीं सन्तनोतु।**
**मन्दं मन्दं मलयपवनो यौवने वातु वातु**
**स्पर्शे स्पर्शे सकलहृदयं-गीतरागं करोतु॥**[११४]

'व्योमशेखर' विशनलालगौडस्य 'अहं राष्ट्री'[११५] भारतराष्ट्रस्य सांस्कृतिकं गौरवं गायति। अत्र वक्त्री अस्ति राष्ट्री या भारतमातेवास्ति। तस्या अभिलषितमिदमस्ति–

**त्रिवर्णा चक्रांका प्रकृतिपुरुषा सर्गरचना**
**पताकाहं राष्ट्री जलधितलमूला हिमलता**
**ऋचा शान्तेश्चाहं व्यपगतभयं विश्वमखिलं**
**मम च्छायानीडे वसतु ससुखं मेऽभिलषितम्।।**[११६]

काव्यस्यास्य समापनं राष्ट्र्या अनेन वाक्येन भवति-**'चिरविजयि राष्ट्रं विजयताम्'**। काव्ये आद्यन्तं शिखरिणीवृतं प्रयुक्तमस्ति।

विद्यासागरस्य श्रमणशतक-निरञ्जनशतक-भावनाशतक-परीषहशतक-सुनीतिशतकानां संकलनं 'पंचशती'[११७] इत्येतन्नाम्ना सञ्जातम्। अस्य संस्कृतटीकाकारः सम्पादकश्च पं. पन्नालाल जैनः साहित्याचार्योऽस्ति।

डॉ. रामाशीषपाण्डेयस्य 'प्रहेलिकाशतकम्'[११८] संस्कृतप्रहेलिकाः प्रस्तौति। 'सुधेन्दु' डॉ. अमियचन्द्रशस्त्रिणः 'श्रीमद्भगवत्परशुराम- विजयशतकम्'[११९] (हिन्दीभाषानुवादसहितम्) श्रीपरशुरामस्य विजयं कीर्तयाति।

'अभिराज' राजेन्द्रमिश्रस्य शतकानां संकलनपि 'पंचकुल्या'[१२०] शीर्षकेण सद्यः प्रकाशितमस्ति। कविरत्नश्रीकृष्णसेमवालस्य 'भीमशतकम्'[१२१] डॉ. भीमराव अम्बेडकरस्य जीवनं सन्देशं च वर्णयति।

'मित्रदूतं' नाम खण्डकाव्यं दूतकाव्यपरम्पायामभिनवं संयोजनमस्ति। मैनपुरीनिवासिना 'प्रणवो'पाख्येन डॉ. इच्छारामद्विवेदेनास्या रचनाया व्याजेन इन्द्रप्रस्थात् बदरीनारायणधाम यावत् यद्यद्रामणीयकं दृष्टं तस्य व्यञ्जना कृता। युवायं कविर्मदीयो घनिष्ठः सुहृत्। एकवारमनेन कैश्चित्स्निग्धजनैस्साकं बदरीनाथ-यात्रा कृता। तदनु श्रीबदरीनाथाय स्वप्रणतिसन्देशं दापयितुकामोऽयं मामेव (रमाकान्तं) मित्रं दूतत्वेन वृणोति-

**कश्चिद्विप्रो मयननगरे ग्रीष्मबाधानुतप्तः**
**प्रत्यावृत्तः सपदि विमलाद्धेमकूटात्पवित्रात्।**
**स्मृत्वा स्मृत्वा परमसुखदञ्चोत्तराखण्डशैत्यं**
**भावाकाशे स्फुरितशिखरः पत्रमेतल्लिलेख।।**

**इन्द्रप्रस्थे विशदविभवे शुभ्रवाणीविहारे**
**कान्तायुक्तं सरसहृदयं श्रीरमाकान्तशुक्लम्।**
**प्रेयोमित्रं मधुरमधुरैर्भावगुच्छैरुपेतं**
**पत्रं दत्वा शुभहिमगिरौ प्रैषयन्मित्रदूतम्॥**[१२३]

एतदनन्तरं कविः प्रस्थानमार्गं निर्दिशति। मयराष्ट्र (मेरठ)-हरिद्वार-मसरी-नौगाँव-बड़कोट-हनुमानचट्टी-नारदचट्टी-जानकीचट्टी-यमुनोत्तरी धाम-ब्रह्मखाल-धरासूँ-उत्तरकाशी-टिहरी-श्रीनगर-रुद्रप्रयाग-तिलवाड़ा-अगस्त्यकुण्ड-गुप्तकाशी-सोनप्रयाग-गौरीकुण्ड-रामवाड़ा-केदारनाथ-आदिशंकरसमाधि - गौरीकुण्ड - चमोली - पीपलकोटि - जोशीमठ-विष्णुप्रयागानतिक्रम्य बदरीनारायणधाम यावन्मार्गं निर्दिश्य कवि श्रीबदरीनारायणाय स्व प्रणतिसन्देशं निवेदयितुं स्वमित्रं प्रार्थयते। लोकवृत्तं काव्यरूपे परिणतं सत्कीदृशं लोकोत्तरं सञ्जायते-इत्यस्य निदर्शनमस्तीदं खण्डकाव्यम्। देवतात्मनो हिमालयस्य श्रृंगाणि दृष्ट्वा मानवो मोदं लभते इति प्रतिपादयन् कविः सम्बोध्यं ब्रूते-

**अत्रस्थस्त्वं शुभहिमगिरेः शुभ्रश्रृंगाणि नूनं**
**दृष्ट्वा दृष्ट्वा चकितनयनैर्मोदभावे निमग्नः।**
**गायन्नुच्चैः सरसकवितां भाति मे भारताख्यां**
**दिव्यं हर्षं कविकुलमणे लप्स्यसे गायनस्य॥**[१२४]

सरससरलं खण्डकाव्यमिदं भारतस्य साम्प्रतिकीं प्राकृतिकीं सांस्कृतिकीं च शोभामुपन्यस्यति सचेतसां पुरतः।

श्री वसन्तत्र्यम्बकशेवडेप्रणीतम् 'अभिनवमेघदूतम्'[१२५] कालिदासमेघदूते ऽचर्चितानां स्थानानां वर्णनमुपन्यस्यति।

आचार्यवनेश्वरपाठकस्य 'तवास्मि दासः'[१२६] इत्येतत्खण्डकाव्यं कुमारसम्भवं शिवपुराणं चाधारीकृत्य विरचितं वर्तते। अस्य पूर्वस्मिन् भागे शिवं वरत्वेन प्राप्तुं पार्वत्या कृता तपस्या वर्णितास्ति, उत्तरस्मिंश्च भागे शिवपार्वतीविवाहो वर्णितोऽस्ति। कविना विवाहमंगलविधिसम्बन्धिन्यो लोकरीतयोऽपि यथावसरं प्रदर्शिताः। सरलसरसा भाषा पाठकानां चेतोहरणाय अलमस्ति। दिङ्मात्रमुदाह्रियते-

**विधौ चतुर्थ्यां विहिते विधानतो लग्ने च वाचस्पतिना सुनिश्चते।**
**हिमालयः स्वां तनुजां शिवान्वितां शिवालयं प्रेषितवान् समादरात्॥**
**प्रस्थानकाले दुहितुर्वियोगात्सवाष्पकण्ठस्खलितैर्वचोभिः।**
**मेना गिरीन्द्रश्च पुरः शिवस्य बद्धाञ्जली व्याहरतां विनीतौ॥**
**प्रभो त्वदर्थं किमपि प्रदेयमप्राप्य जामातृवराय तुभ्यम्।**
**चेतोऽस्मदीयं नितरां सखेदं क्षमस्व शम्भो त्रुटिमस्मदीयाम्॥**
**कृपा त्वदीया सुखदा मयीयं सम्बन्धरूपा समभूत् तथैव।**
**दृश्या मदीया तनुजा त्वयेयं गच्छ प्रभो! वां शुभमस्तु सर्वम्॥**
**प्रणम्य मेनागिरिराजपादौ सम्प्राह शम्भुर्विनयानतौ तौ।**
**दत्तं युवाभ्यां यदमूल्यवस्तु केनापि नो तादृशमस्ति दत्तम्॥**

डॉ. भास्करायार्यत्रिपाठिनो 'मृत्कूटम्' (मानवशतकम्)[१२८] स्रग्धराणां शतेनान्वितं प्रबन्धरसान्वितं खण्डकाव्यप्रभामण्डितं शतककाव्यमस्ति। अत्र कवेश्चिन्तनं काव्यरूपे परिणतम्। मृदः समुत्पन्नो मानवः आजन्मनो मृत्युपर्यन्तं विविधचेष्टाः कुर्वाणोऽन्ते मृद्येव लीनो भवति। तस्यैव मानवस्येयं गाथा–

**मृत्स्नायाः संप्रजातः सुचिरमवकलन्मृत्तिकाभिर्विनोदं**
**मृत्सार्थं सस्पृहोऽभूदुचितमनुचितं सर्वमर्थं व्यतार्षीत्।**
**सम्प्रत्येवञ्च लोष्टैरपिहितविवरे चत्वरेऽसौ मृदायाः**
**शेते विश्रान्तबोधो निपतति नियतं मृत्तिकायां मृदंशः॥**[१२९]

काव्यस्यास्य विभाजनं भ्रूणः, शिशुः, किशोरः, तरुणः, गृहस्थः, प्रवासी, भृतकः प्रौढः, जरठः मुमूर्षु, इत्येतेषु दशभागेषु कृतमस्ति कविना। कस्मिन्नपि वयसि वर्तमानो मानवः स्वच्छायामस्मिन् काव्ये द्रष्टुं शक्नोति। तरुणानां स्थितिं वर्णयन् कविः कथयति

**साक्षादग्रेऽवतीर्णो यदि नवयुवकं राजराजोऽनुयुङ्क्ते**
**किन्ते प्रेयो नितान्तं वद भयरहितो यौवनं वा धनं वा,**

तत्तूर्णं सोऽभिदध्यात् प्रथमचयनिका रोचते देव मह्यं
यत्ते वस्तु द्वितीयं तदु निजवसतौ किन्नरेभ्यः प्रदेयाः।।[१३०]

पाठी पाठीनवृत्त्या परिवहसलिलेऽप्येष याति प्रतीपं
वाजीवाजीवहेतोः श्वसितपरिमितं धावति स्तब्धकर्णः।
भोगी भोगीव चारात् तरलयति फणां तुम्बिकागीतलुब्धः
स्वापी स्वापीतिशंकामजगरसदृशो नैव वित्ते वयस्थः।।[१३१]

वार्धकस्य चित्रणं कियद् हृदयस्पर्शीति विलोक्यताम्–

मृत्कूटो वार्धकेऽयं विविदिषतितरामंकुराणां विलासं
लास्यं जातीदलानां स्मृतिमवतरति स्थाणुशाखोटकस्य।
किन्तु क्रव्यानुरूपां पृथुतरकरकामंजसा सेवमानः
कीर्णत्रोटिः क्षणार्धे लवपरितुलितो ध्वांक्षवद्वाव्यथीति।।

योऽसौ शाखामृगोऽभूत् तनुपदयुगली चालयन् बाल्यकाले
शार्दूलोदग्रलीलां तरुणिमनि नवां शिश्रिये धीरचारः।
प्रौढः स्तम्बेरमाणां व्यधित गतिविधिं हन्त धिक्कारपात्रं
सोऽयं खट्वानिलीनो ज्वरदजगरतां वार्द्धके वावहीति।।[१३२]

नूनं मृत्कूटस्यैकैकं पद्यं प्रबन्धशतायमानं विभाति। अस्य काव्यस्य कविनैव कृतो हिन्दीगद्यानुवादोऽपि काव्यश्रियालंकृतोऽस्ति। 'नवद्वार' मितिशीर्षकोपेता दण्डकात्मिका भूमिकापि अलंकृतकाव्यपद्धतिं पुष्णाति। अवतरणिकायाम् अवस्थिभिः डॉ. बच्चूलालैः काव्यस्यास्य समीक्षा कृता या पाठकानां कृते अत्यन्तमुपयोगिनी। अस्य काव्यस्य समीक्षणं व्याख्यानं च कर्तुं सहृदया विद्वांसः सादरमाहूयन्ते।

डॉ. परड्डीमल्लिकार्जुनप्रणीतं 'सटीकम् अक्कमहादेवीशतकं'[१३३] 'सटीकं गंगाधरचरितं'[१३४] च क्रमशः मल्लिकार्जुन-प्रभुवरभक्तिं शिवयोगीश्वर- गंगाधरचरितं च प्रस्तुवतः।

अद्यत्वे यादृशी राजनीतिर्देशे प्रचलति सा नास्ति कस्यापि दृष्टेरगोचरा। अस्माभिरेव स्वदृशा ते राजनेतारो दृष्टा ये चारित्र्यवन्त आसन्, यैश्च देशसेवार्थं सर्वस्वं त्यक्तम्, अस्माभिरेवैतादृशा अपि राजनेतारोऽद्यत्वे ऽवलोक्यन्ते ये देशहितापेक्षया स्वहितमेव कांक्षन्ति, ये जनान् प्रत्यहं योधयन्ति, ये पुरा दुर्भावनादीप्तिं कुर्वन्ति तदनु च सद्भावना-यात्रां कृत्वा आगामिनि निर्वाचने तैस्तैरुपायैर्विजयं लब्धुमेव सतृष्णास्तिष्ठन्ति, देशसेवाया व्रतं गृहीत्वा ये निर्वाचनागंणेऽवतरन्ति पुनश्च लब्धे मनोरथे यादृच्छिकमाचरन्ति, पादयोः प्रणिपत्य घोणाघर्षणं कृत्वा मतं याचन्ते किन्तु मतदातुर्मतस्यादरं न कुर्वन्ति, शासनासन्दिकाराधनैकव्रतानामेतादृशां युगपुरुषाणां विषयेऽपि अभिधया, लक्षणया, व्यंजनया वा संस्कृतरचनाकृद्भिर्भावा व्यक्ताः। डॉ. दीपकघोषस्य 'राजनीतिलीलाशताधिक'[१३५] चलमानराजनीतिमवलम्ब्य विरचितं सोल्लुण्ठकाव्यं वर्तते। इदं काव्यं खण्डकाव्यस्य शतककाव्यस्य वा कोटौ स्थापनीयमस्ति। इदं काव्यं प्रथमम् 'अर्वाचीनसंस्कृते' प्रसिद्धं जातं तदनु च पृथक्पुस्तकाकारेण प्रकाशितं वर्तते। कविना एकादशोत्तरैकशतपद्येषु राजनीतिं प्रति प्रणतिपुरस्सरं स्वभावा विचाराश्च निवेदिताः–

**भो राजनीते प्रणमामि तुभ्यं पुनः पुनस्ते पदयोः प्रणामः।**
**अनन्तकीर्तीरमिताश्च शक्तीः शक्नोमि मातुं न तव क्षमस्व॥**
**विचित्रवर्णा न विशेषवर्णा विचित्रमार्गा न विशेषमार्गा।**
**विचित्रचित्ता च हि दुष्टचित्ता भो राजनीते भवती विचित्रा॥**[१३६]

क्वचित्कवी राजनीतिं मधुरैर्वचोभिरधिक्षिपति, क्वचित्तस्याः स्वार्थ-साधनतत्परतां विवृणोति। तद्यथा–

**न वेत्सि वृद्धं न शिशुं न नारीं नार्तं न दीनं न तु वेत्सि मित्रम्।**
**न वेत्सि किं स्वानपि वत्सकांस्ते स्वमेव वेत्सीह भृशं विचित्रे॥**[१३७]

अद्य सर्वलाभकरो व्यवसायो राजनीतिरेव प्रतीयते, तदैव तु कलाकाराः, शिल्पिनः, अभिनेतारः, प्राध्यापकाः, सैनिकाः, सर्वेऽपि स्वनियोगं शून्यं कृत्वा राजनीतिमेव सेवितुकामा अवलोक्यन्ते–

विस्मृत्य सम्प्रत्यभिनीतिशिल्पं समुज्ज्वलच्छिल्पिसुचित्रतारकाः।
अत्युच्चकैः कीर्तिदिवश्च्युतास्तव भो राजनीतेश्चरणं समाश्रिताः।।
स्थानाय ते पादसरोजयोश्च विसर्ज्य तौर्यत्रिकशिल्पचर्चाम्।
अन्ये कलाशिल्पगुणाधिराजाः सर्वे हि धावन्तितरामलज्जम्।।
अध्यापनं चाध्ययनं च शश्वद् विवेचितं यैस्तप एकमेव।
धावन्ति ते ज्ञानतपस्विनोऽपि निर्वाचने त्वत्पदरेणुलोभाः।।
दुर्लभ्यनिर्वाचनमाल्यलोभी धावत्यसौ मल्लयुयुत्सुवीरः।
शरीरचर्चां परिहाय पश्चादास्फोटयन् बाहुयुगं स्मयेन।।
प्राणव्ययेनापि च देशमातृकारक्षाव्रतं पूर्वकृतं विसर्ज्य।
सीमान्तभूमिं परिवर्ज्य सैनिकास्त्वां मातृकां पूजयितुं प्रवृत्ताः।।
क्रीडांगणं शून्यमदो विशारदै रणांगणं वीरभटास्त्यजन्ति।
मन्त्री गतः क्व सचिवः क्व वास्ते कार्याधिकारा मरुवद्विभान्ति।।
एवं तवाङ्घ्रिस्फुटपंकजामृतनिष्यन्दविन्दून् परिलेढुकामाः।
एकैकशो देशविशिष्टशिष्टा. निर्वाचनप्रार्थितया समेताः।।[१३८]

डॉ. दीपकघोषस्य कवितेयं निरन्तरं परिवर्धमाना एव चकास्ति। एकनवत्युत्तरैकोनविशंविशततमेशवीयेऽब्दे जनवरीमासे 'अर्वाचीनसंस्कृते' अस्या १११ पद्यानि प्रकाशितानि जातानि। अतः परमपि मत्सकाशे प्रिय- बन्धोरस्य राजनीतिलीलापद्यानि नैकवारं प्राप्तानि, प्राप्यन्ते च। द्वानवत्युत्तरैकोन- विशंतिशततमेशवीयेऽब्दे जनवरीमासेऽपि अर्वाचीनसंस्कृते कानिचित् पद्यानि मुद्रितानि।

डॉ. चन्दनलालपाराशरेण 'मंगलं भारतम्'[१३९] इत्येतत्काव्यं प्रणीतम् यत्र भारतस्य सांस्कृतिकी, भौगौलिकी, सामाजिकी च सुषमा-'भाति विश्वं प्रियं मंगलं भारतम्' इति मुकुटालंकृतैः अष्टषष्ट्युत्तरैकशत-(१६८) पद्यैः किंच भारताष्टकेन समुन्मील्यते। इदं काव्यमास्माकीनस्य 'भाति मे भारतम्'[१४०] इति काव्यस्य परम्परां विस्तारयति इति दर्शं दर्शं मोदामहे। तद्यथा–

**वेशभूषाशनोपासनापद्धति-क्रीडनामोदसंस्कारवृत्त्यादिषु।**
**यद्धि भिन्नं सदप्यस्त्यभिन्नं सदा भूतले भाति तन्मामकं भारतम्।।**

(भाति मे भारतम्/५)

**वेशभूषा विभिन्नं विभिन्नं मतं भिन्नभाषारुचिः सौरभं संस्कृतम्।**
**भिन्नतायां समानैकता भारते विश्वबन्धुत्वभावः सदा शोभते।**
**दीप्तिदं रीतिदं गीतिदं भारतम्। भाति विश्वे प्रियं मंगलं भारतम्।।**

(मंगलं भारतम् ४८, पृ. २४)

**विद्युदुत्पादने तैलसंशोधने इन्धनान्वेषणे लौहनिष्पादने।**
**यन्त्रनिर्माणकार्ये समर्थं च सद् भूतले भाति मेऽनारतं भारतम्।।**

(भाति मे भारतम् १२)

**तैलशोधे तथा विद्युदुत्पादने लौहनिर्माणकार्ये वियद्धावने।**
**ज्ञान-विज्ञानसत्त्वेऽग्रगण्यं प्रियं शक्तिकेन्द्रं सुशक्तं दधानं प्रियम्।।**
**अगं सर्वगं शक्तिगं भारतम्। भाति विश्वे प्रियं मंगलं भारतम्।।**

(मंगलं भारतम् ६१, पृ. ३१)

'प्रज्ञाभारती' डॉ. श्रीधरभास्करवर्णेकरेण अष्टसु अध्यायेषु १५१ एकपंचाशदुत्तरैकशतानुष्टुब्वृत्तेषु प्रणीता 'संघगीता'[१४१] राष्ट्रीयस्वयंसेवक-संघस्य परिचयं ददाति। तद्यथा–

**मैत्री समानशीलेषु करुणा दुर्बले जने।**
**मुदिता सज्जनोत्कर्षे स्यादुपेक्षा विरोधके।।** (१४३)

## काव्यसंकलनानि

आलोच्यकाले नैकेषां कवीनां काव्यसंकलनान्यपि प्रकाशितानि यत्र पूर्वप्रकाशिताः किञ्च प्रत्यग्रा रचनाः संकलिताः सन्ति। शिवशुकीय-सीमा-सन्ध्या-पाथेयशतक-कर्तुः डॉ. रामकरणशर्मणः 'वीणा' किञ्च 'दीपिका' इत्येते संकलने कवेः विशदमनुभवं विशालां च काव्यदृष्टिं पुरस्कुरुतः। 'वीणा' त्रिषष्ट्युत्तर-द्विशत (२६३) कवितानां 'दीपिका'[१४३]

च अष्टोत्तरशत (१०८) कवितानां संग्रहौ स्तः। अत्र अन्योक्तयः, स्तुतयः, प्रस्तुतयः, संस्तुतयः, प्रकृतिवर्णनम्, प्रबोधनम्, हास्यव्यङ्ग्योक्तयः इदं सर्वमपि लब्धुं शक्यते। भक्तिभावः कथमत्रोच्छलतीति दिङ्मात्रं प्रस्तूयते। 'शिव त्वां वन्दे' इत्येतत्स्तुतौ शिवं प्रति भक्तो भणति–

**प्रियास्ते नागेन्द्रा मम मनसि ते सन्ति बहवो**
**विषं प्रेयः पेयं तदपि बहुशः संचितमिह।**
**दिधक्षुस्त्वं कामं तमपि भव पश्येह सशरं**
**दुरन्ताशाभस्मावचय इह शम्भो! सुनिहितः॥**[१४४]

साहित्य-अकादम्या 'षोडशी-[१४५] तिनाम्ना 'समकालिकसंस्कृत-काव्यसंग्रहः' प्रकाशितः। अत्र हि वेंकटरामराघव-वीरेन्द्रकुमारभट्टाचार्य-बटुकनाथशास्त्रिखिस्ते - रतिनाथझा - मधुरकरगोविन्दमाइणकर - उमाशंकरत्रिपाठि-श्रीधरभास्करवर्णेकर-रेवाप्रसादद्विवेदि- के. राजनशास्त्रि-जगन्नाथपाठक- रामकरणशर्म- 'अभिराज' राजेन्द्रमिश्र- रसिकविहारीजोशि-श्रीभाष्यम् विजयसारथि-हर्षदेव माधव केशवचन्द्र- दाशेति-षोडशकवीनां रचनाः संकलिताः सन्ति।

कविरत्न ओम्प्रकाशठाकुरस्य 'गीतिमञ्जरी'[१४६] षट्त्रिंशद् गेयरचनानां 'इन्द्रधनुः'[१४७] च पंचसप्ततिगीतानां संकलनमस्ति। उभयत्रापि सरल-संस्कृतेन जीवनस्य नैके आयामाः स्पृष्टाः कविना। बालका अपि सौकर्येण इमानि गीतानि गातुं शक्नुवन्ति।

ई.पी. भरतपिषारटिना प्रणीतं 'नवरत्नम्'[१४८] नवखण्डेषु विभक्तमस्ति। प्रथमे मौक्तिकखण्डे अभिनयगानानि, द्वितीये माणिक्यखण्डे एकांकनाटकानि, तृतीये वैडूर्यखण्डे एकांकगीतानि, चतुर्थे गोमेदखण्डे प्रभाषणानि, पंचमे इन्द्रनीलखण्डे भक्तिगानानि, षष्ठे विद्रुमखण्डे कथाकथनं, सप्तमे पुष्यरागखण्डे आदर्शलेखाः नवमे च मरकतखण्डे समूहगानानि संकलितानि। लेखकेन ग्रन्थस्य आंग्लभाषानुवादोऽपि कृतः।

ग्रन्थस्य वज्रखण्डे 'पत्रिकास्वयंवरः' साम्प्रतिकसंस्कृतपत्रिकाणां विषये सूचनाः प्रददाति। तद्यथा–

**स्वयंवरे संस्कृतपत्रिकाणां विवोढुकामान् परिचाययन्ती।**
**प्रभूतदुग्धा चरितेष्वमुग्धा जगाद तान् संसदि कामधेनुः॥**

'कामधेनुः' श्रीभरतपिषारटिसम्पादिता पत्रिकास्ते या क्रमशः 'सुधर्मा' –'भारतमुद्रा'–'विश्वभाषा'–'परमार्थसुधा'–'अर्वाचीनसंस्कृत'–संगमनी'– 'भारतोदय'–'भास्वती'–'सागरिका'–'शारदा'–'गीवार्णसुधा'–'संस्कृत भवितव्य'–'उत्कलोदय'–'संस्कृतामृत'–'विश्वभाषा'–पत्रिकाणां परिचयं प्रस्तौति। तद्यथा–

**पश्याग्रतस्ते ननु भासतेऽर्वाचीनात्मिका संस्कृतपत्रिकेयम्।**
**शुक्लो रमाकान्तसुधीः सुधीरः पुष्णाति दिल्लीनगरे सुखं याम्॥**
**नेयं प्रमत्ता शबलैर्विचित्रैर्विभूषणैर्नागरिकत्वमुग्धा।**
**उदात्तभावैरनवद्यकाव्यैरुपात्तसौभाग्यमियं विभाति॥**
**पुनः सखे विश्वमिमं पुनाना पुनानगर्याः शबला प्रमेयैः।**
**अपोहितुं सन्तमसं जनानां विशारदा राजति शारदेयम्॥**
**लेखैरनेकैरनुवाचकानामत्यन्तहृद्या ननु पाक्षिकीयम्।**
**सम्पाद्यते चारु वसन्तपूर्वैरनन्तगाड्गीळमहानुभावैः॥**

पाठशालासु कलाकार्यक्रमावसरेषु रंगावतरणार्थम् विरचितानां बहुरूपाणां संस्कृतरचनानां संकलनमिदं संस्कृतस्य प्रचार-प्रसार्थमुपयोगि विद्यते।

डॉ. इच्छारामद्विवेद 'प्रणव'स्य 'गीतमन्दाकिनी'[१५१] तस्य इतः पूर्वं यत्र तत्र प्रकाशितानामप्रकाशितानाच गीतानां संकलनमस्ति यत्र भक्ति- श्रृंगार- परकाणां गीतानां प्राधान्यं विद्यते।

डॉ. उमा देशपाण्डे-महाभागा स्व 'अर्चनम्'[१५२] नाम्नि त्रयश्चत्वारिंशत् स्फुटककाव्यानां संग्रहे स्व कर्मस्थलं वटोदरम्, गुर्जरभूमिं, भारतं च मनोयोगेन वर्णयति, ईश्वरं महापुरुषाँश्च वन्दते। सत्स्वपि केषुचिद्व्याकरणस्खलनेषु काव्यमिदं पठनीयमेव। रचनायामाद्यन्तं प्रसादगुणो व्याप्तः। तद्यथा–

**वर्षति मेघो मधुमधुरम्।**

**नृत्यति विद्युत् हसति धरित्री नभस्तलं सखि तिमिरमयम्।।**
**सान्द्रं विपिनं स्तब्धा सरसी मुग्धं भाति रविबिम्बम्।।**[१५३]

श्रीशुकदेवशर्म 'मुनि' प्रणीतं 'मंगलानक्षत्रम्'[१५४] त्रिषष्टि ६३ कवितानां संकलनं विद्यते यत्र विविधविषयेषु कविना सरलसंस्कृतेन रचना कृता। सुभाषितान्यपि बहूनि सन्ति। तद्यथा–

**मातुस्तृषाऽपत्यसुमंगलाभाः स्वसुस्तृषा सोदर-भान-भावाः।**
**तेनुस्तृषा राष्ट्रसुखे विभागाः दातुस्तृषा याचक-काम-भाषाः।।**
**गुरोस्तृषा शिष्य-विकास-लाभः साधोस्तृषा मोक्षविमोक्षलाभः।**
**हंसे तृषाथो पयसां विभागः विज्ञे तृषा नूतन-योग-लाभः।।**
**मेघे तृषा चातक-वारिदानं गोपे तृषा गोकुलपालनं वा।**
**वैद्ये तृषा रोगिरुजो निवृत्तिः कृषेस्तृषा क्षेत्र-विकास-वृत्तिः।।**
**रवेस्तृषा लोक-तमो-विनाशः हरेस्तृषा भक्तहितेक्षणं च।**
**कवेस्तृषा काव्य-विपाक-पाकः, मुनेस्तृषा मोक्ष-पदार्थ-लाभः।।**[१५५]

संस्कृतवृत्तानां सौन्दर्यमनितरसाधारणमस्ति। तत्रैकं वृत्तमस्ति अश्वधाटी। तल्लक्षणं यथा–

**'अश्वोत्तरा भवति धाटी यदा तभ्यजा सा रनौ गुरुयुतौ'**

अस्मिन् वृत्ते अनुप्रासस्य चमत्कारो विशेषेण दृश्यते। नैकशताब्दीत इदं वृत्तं लोकप्रियं वर्तते। अद्यापि डॉ. भास्कराचार्यत्रिपाठिप्रभृतिभिः कविभिरस्मिन् वृत्ते रचना क्रियते।[१५६]

आद्यशंकराचार्यस्य 'अम्बाष्टकं', जगन्नाथपण्डितस्य 'वन्दनावलिः', म.म. रामशास्त्रितैलंगस्य 'शिवाश्वधाटी', म.म. दुर्गाप्रसादद्विवेदस्य 'देवीस्तुत्यश्वधाटी', पं. आनन्दझाकवेः 'श्रीस्तुतिः', हेब्बारशास्त्रिणो 'लक्ष्मीस्तुतिः', भट्टमथुरानाथशास्त्रिणश्च 'हयग्रीवाश्वधाटी' प्रसिद्धा अश्वधाटयः सन्ति। एतासां संकलनं डॉ. विनोदरावपाठकेन 'अश्व धाटीघटा'[१५७] शीर्षकेण कृतम्। चतुर्विंशत्युत्तरैकशत (१२४) संख्याका अश्वधाट्योऽत्र संकलिताः।

राधावल्लभस्य 'लहरीदशकं'[१५८] वसन्त-निदाघ-प्रावृड्-धरित्रीदर्शन-जनता-रोटिका-नर्मदा-मृत्तिकाद्यापि-प्रस्थानेति दश लहरीणां संकलनमस्ति यत्र, द्विपंचाषत्प्रायाणि पद्यानि प्रत्येकं शीर्षके रचितानि। यद्यपि लहरीतिनाम्ना प्रसिद्धासु रचनासु प्रायशः प्रयुक्तं शिखरिणीवृत्तं लहरीदशके सर्वथानुपस्थितमस्ति तथापि विषयविशेषं विविधदृशा विस्तारन्त्योऽत्र संकलिता रचनाः कवेः नवनवोन्मेषशालिनीं प्रतिभां पिशुनयन्ति। अत्र संकलिताः काश्चन रचना इतः पूर्वं 'दूर्वा' पत्रिकायापि प्रकाशितास्सन्ति।

'कालिदास एण्ड मैक्समूलर इण्टरनेशनल संस्कृत सोसायिटी' ति संस्थया 'राष्ट्रियमैक्यम्' इतिशीर्षकं संकलनं प्रकाशितं यत्र नवकवीनां राष्ट्रभक्तिपरका श्चतुर्दश रचनाः संकलिताः सन्ति।[१५९]

मुक्तच्छन्दोरचनासु विद्वन्मणेः केशवचन्द्रदाशस्य 'ईशा'[१६०] हर्षदेव माधवस्य 'अलकनन्दा' 'शब्दानां निर्मक्षिकेषु ध्वंसावशेषेषु'[१६१] च, डॉ. प्रकाशपाण्डे-कवेः 'विग्नदेईमन्'[१६२] इत्येतदादिका रचना लोचनपथमवतरन्ति। नैकपत्रपत्रिकास्वपि एतादृश्यो रचनाः प्रकाशिता भवन्ति यत्र नवीनविषयैः साकं नूतना रचनापद्धतिः कविभिरंगीकृता वर्तते।

## स्तोत्रकाव्यानि

'कविरत्न' श्रीकृष्णसेमवालेन 'हनुमत्सुप्रभातम्'[१६३] प्रणीतं यत्र एकपंचाशत् (५१) पद्यैः श्रीहनुमतश्चरित्रं सभक्तिभावं गीयते। यद्यथा–

**मुखेऽपि रामो हृदयेऽपि रामो विभाति कार्येष्वपि यस्य रामः।**
**कपीश्वरो राममधः स एव करोतु नित्यं मम सुप्रभातम्॥**[१६४]

श्रीसुन्दरराजप्रणीतं स्तोत्रद्वयं 'श्रीहनूमत्पंचाशत् शरणागतिषोडशी च'[१६५] श्रीहनूमन्तं प्रति श्रीमन्नारायणं च प्रति कवेः प्रपत्तिभावं द्योतयति।

रमाकान्तशुक्लस्य 'महाकाल-मालिकास्तोत्रम्'[१६६] दूर्वायां प्रकाशितम्।

## कथाः

आचार्यकेशवशर्मशास्त्रिणाः 'सरिता'[१६७] विविधभावोद्बोधिनीनां षोडशकथानां

संग्रहोऽस्ति। विद्वन्मणेः डॉ. केशवचन्द्रदाशस्य 'महान्'[१६८] किंच 'एकदा'[१६९] इति ग्रन्थद्वये २१ बालकथाः संकलिताः सन्ति। तस्यैव 'मधुयानम्' 'विसर्गः' इत्युपन्यासद्वयमपि[१७०] कथाकाव्यपरम्परां विस्तारयति। सरललघुवाक्यानि डॉ. दाशस्य शैल्यै वैशिष्ट्यं ददति। सर्वासु रचनासु तस्य दार्शनिकता प्रतिबिम्बिता भवति।

श्रीमधुरशास्त्रिणा श्रीजयप्रकाशभारतीलिखिताः एकविंशतिकथाः 'बालैकविंशतिः'[१७१] इत्येतच्छीर्षकेण संस्कृतेऽनूदिताः। सचित्रा इमाः कथा बालानां सुखबोधाय स्थूलाक्षरैः मुद्रापिताः सन्ति। सरल-सरलानि वाक्यानि कथाः सुबोध्याः सम्पादयन्ति।

## हास्यव्यङ्ग्य-रचनाः

'अभिराज' राजेन्द्रमिश्रस्य 'वाणीघटकमेलकम्'[१७२], डॉ. मधुसूदन मिश्रस्य 'श्वेतविप्लुतम्'[१७३] (प्रकाशनाधीनं) डॉ. प्रशस्यमित्रशास्त्रिणः 'कोमल-कण्टकावलि'श्च[१७४] हास्य-व्यङ्ग्यरचनाः सन्ति।

डॉ. प्रशस्यमित्रशास्त्रिणो व्यङ्ग्यरचना 'कोमकण्टकावलिः' नवकण्टकेषु (भागेषु) राजनीति-दाम्पत्य-प्रेमिका-विद्यालय-न्यायालय-आपण-माणवक-यात्रा-विप्रकीर्ण-विषयिण्यस्ताः दशा वर्णयति याः पठित्वा श्रुत्वा च पाठकः स्मेरमुखो भवत्येव।

## विविधानि काव्यानि

डॉ. मधुसूदनमिश्रस्य 'स्वेतम्'[१७५] आत्मवृत्तात्मकं काव्यमस्ति यत्र तेन कटुमधुराणां प्रसंगनामपीङ्गितं कृतम्।

## छन्दः

डॉ. रामकिशोरमिश्रस्य 'छन्दस्कलावती'[१७७] छन्दः शास्त्रविषयको ग्रन्थोऽस्ति।

प्रो. मूँगारामत्रिपाठी विगतकतिपयेभ्यो वर्षेयः संस्कृतकाविकर्मणि प्रवृत्तः। तस्य 'भारतवन्दनम्' 'मनो मे गहनतमसि संलिप्तम्' 'शरत्सौरभम्' इत्येता रचनाः 'रसरंग'[१७८] इति लघुपुस्तिकायां प्रकाशिताः।

## काव्यानुवादाः भाषानुवादाश्च

महाभारतस्य[१७८], रामायणस्य[१७९], नीतिशतकस्य[१८०], चाणक्यनीतेः[१८०] विदुरनीतेः[१८२] उपनिषदां[१८३], गीतायाः[१८४], मेघदूतस्य[१८५], भगवदज्जुकीयस्य[१८६], लटकमेलकस्य[१८७], मदनकेतुचरितस्य[१८८], स्नुषाविजयस्य[१८९], उभयरूपकस्य[१९०], अन्येषां च ग्रन्थानां गढ़वालीभाषानुवादाः, हिन्दीभाषानुवादाः, हिन्दी-पद्यानुवादाश्च सञ्जाताः।

'कोमलकण्टकावल्या' अनुवादो[१९१] डॉ. रमापतिमिश्रेण कृतः। भर्तृहरिशतकानां हरियाणवीभाषायां पद्यानुवादः 'यात्रा के पड़ाव'[१९२] इतिशीर्षकेण डॉ. जयनारायणकौशिकेन कृतः। रमाकान्तशुक्लस्य संस्कृतकवितानामांग्ल भाषारूपान्तरणं डॉ. रमा झा डॉ. एस.पी. दीक्षितश्च कृतवन्तौ।[१९३] श्रीमधुर- शास्त्रिणा 'भारतीय कविताएँ' इत्यस्मिन् ग्रन्थे ६९-९१ कालावधौ प्रकाशितानां संस्कृतरचनानां हिन्दीपद्यानुवादो विहितः।[१९४]

## सुभाषितसंग्रहाः

सुभाषितसंग्रहाणां प्रथमं प्रकाशनं पुनर्मुद्रणं चाप्यालोच्यकाले संस्कृत साहित्यस्य कलेवरं पुष्णाति। महोपाध्यायललितप्रभसागर-सम्पादितः 'विश्वसंस्कृत- सूक्तिकोशः'[१९५] त्रिषु खण्डेषु प्रकाशितोऽस्ति। श्रीलछमनसिंह अग्रवालस्य 'ऋतम्भरा'[१९६] तस्य पूर्वकृतिषु समागतानां सुभाषितानां संग्रहोऽस्ति। 'सुभाषितरत्नभाण्डागार'[१९७] स्यापि पुनर्मुद्रणं जातम्।

## साहित्यकोशाः

'प्रज्ञाभारती' डॉ. श्रीधरभास्करवर्णेकरस्य 'संस्कृतवाङ्मयकोश'स्य तृतीयखण्डः[१९८] भागद्वये प्रकाशितोऽस्ति यत्र धर्मार्थकाममोक्षेतिचतुर्षु विभागेषु संस्कृतस्य पारिभाषिकशब्दानां परिचयो दीयते। प्रसंगतः साहित्यशास्त्र-नाट्यशास्त्रादिसम्बद्धाः शब्दा अप्यत्र विवेचिताः सन्ति। सुविदितमेव विदुषां यदितः पूर्वमस्य कोशस्य खण्डद्वयं प्रकाशितमस्ति यत्र प्राचीनार्वाचीनसंस्कृत- ग्रन्थ-ग्रन्थकाराणां विषये महत्त्वपूर्णा सामग्री

संकलितास्ति। डॉ. सत्यपालनारंगो महाकाव्यपादकोशं कालिदास-बिब्लियोग्राफीं च पूरयितुं यतते।[१९९]

## टीकाग्रन्थाः, सम्पादितसंस्करणानि

अनेकेषां काव्यानां टीका अपि सम्पाद्य प्राकाश्यन्त। सौन्दरनन्द[२००]-चौरपंचाशिका[२०१]-पंचतन्त्र[२०२]-सौन्दर्यलहरी[२०३]-साम्बपंचाशिका[२०४]-जानकीहरण[२०५]-विरूपाक्षपंचाशिका[२०६]-कृष्णकुतूहल[२०७]-महाभारततात्पर्यप्रकाश[२०८]-हितोपदेश[२०९]-प्रभृतिग्रन्थानां सटीकसंस्करणानि प्रकाशितानि जातानि। वेदान्तदेशिकस्य 'यादवाभ्युदयमहाकाव्यमवलम्ब्य डॉ. वासुवदेवाचारियर-महाभागेन विचारितम्।[२१०]

केरलवर्मविरचितं 'क्षमापणसहस्रं'[२११] डॉ. पूवत्तूर रामकृष्ण पिल्लै महाभागेन सम्पादितम्।

## साहित्यशास्त्रनाट्यशास्त्रग्रन्थाः

डॉ. शिवजी उपाध्यायस्य 'साहित्यसन्दर्भः'[२१२], डॉ. मनोहरकालेमहाभागस्य 'भारतीय काव्यशास्त्र के नये आयाम' (प्रथम भाग रससिद्धान्त)[२१३] ज्ञानचन्द्रशास्त्रिणः 'पाश्चात्त्यकाव्यशास्त्रम्'[२१४], डॉ. सत्यव्रतशास्त्रिणः 'एकावली'[२१५], डॉ. राधावल्लभत्रिपाठिनः, 'संक्षिप्तनाट्यशास्त्रम्'[२१६] आचार्यरामगोविन्दशुक्लसम्पादितः काव्यप्रकाशः (चण्डीदासकृतया दीपिका-टीकया विभूषितः),[२१७] डॉ. पारसनाथद्विवेदिसम्पादितं श्रीभरतमुनिप्रणीतं नाट्यशास्त्रं (श्रीमदभिनवगुप्तकृतया 'अभिनवभारती' व्याख्यया डॉ. पारसनाथद्विवेदिकृतया 'मनोरमा' हिन्दीव्याख्यया च विभूषितम्)[२१८], डॉ. रमेशकुमारपाण्डेयस्य 'भरतमुनि साहित्यशास्त्र के आदि आचार्य'[२१९] एते ग्रन्थाः साहित्यतत्त्वं विमृशन्ति। डॉ. गोविन्दचन्द्रपाण्डेयस्य व्याख्यानत्रयं 'भक्तिदर्शनविमर्शः[२२०] इतिग्रन्थरूपेण प्रकाशितमस्ति। श्रीबटोहीझा 'पंचमी साहित्यविद्या'[२२१] इत्येतत्संज्ञके एकोनाशीत्युत्तरद्विशत २८९ कारिकोपेते स्वप्रबन्धे काव्यशास्त्रानुदर्शनं प्रस्तौति। स पूर्वाचार्यव्याख्यातान् रसालंकारगुणादीन् सरलया शैल्या प्रस्तौति। एतेन सुकुमारबुद्धीनां छात्राणां

हितमवश्यं स्यात्। डॉ. सुषमाकुश्रेष्ठप्रणीतं 'मेघदूतसंगीतपल्लवी'[२२२] 'ऋतुसंहार-संगीतसुरभिः'[२२३] इत्येतद्ग्रन्थद्वयं साहित्यसंगीतयोर्मैत्रीं पुष्णाति।

## पत्र-पत्रिकासु प्रकाशिताः साहित्यिकरचनाः

भारतेऽद्यत्वे नैकाः संस्कृत-पत्रिकाः प्रकाश्यन्ते यासु सुधर्मा, नवप्रभातम्, संस्कृतभवितव्यम्, गाण्डीवम्, युगगतिः, शारदा, संस्कृत-साकेतः हित साधिका, गोरखपुरचर्चा, सूर्योदयः, भारती, संस्कृतामृतम्, पारिजातम्, गीर्वाणसुधा, दिव्यज्योतिः, भारतोदयः, संस्कृतप्रचारकम्, गैर्वाणी, श्रीः, लोकसुश्रीः, संस्कृतदुन्दुभिः, साग्मनस्यम्, सत्यानन्दम्, श्रीपण्डितः, संस्कृतमन्दाकिनी, कालिदासः, ब्रजगन्धा, सारस्वती सुषमा, अजस्रा, परमार्थसुधा, विश्वसंस्कृतम्, स्वरमंगला, दूर्वा, संगमनी अनादिवाक्, आरण्यकम् सागरिका, संस्कृतसंजीवनम्, विश्वभाषा, संस्कृतवाणी, श्यामला, युगप्रभा, संस्कृतश्रीः, कामधुनेः, प्रियवाक्, प्रियम्वदा, संस्कृतमञ्जरी, संविद्, शोधप्रभा सुरभारती इत्याद्याः पत्रिकाः प्रामुख्यं भजन्ते। नेपालादिदेशेष्वपि 'हैमवती' त्याद्याः पत्रिकाः प्रकाश्यन्ते।[२२४]

एतासु पत्र-पत्रिकासु विविधविषयेषु विविधरूपेषु यत्संस्कृतसाहित्यं प्रकाश्यते तन्नास्ति कदाप्युपेक्षणीयम्। को न जानाति यत् साम्प्रतिकानि प्रसिद्धानि काव्यानि प्रथमं प्रायः संस्कृतपत्रिकास्वेव प्रकाशितानि जातानि। तदनु च पृथक्पुस्तकाकारेण प्रकाशितान्यभूवन्। अद्यत्वेऽपि धारावाहिकरूपेण विविधपत्रिकासु वृहत्काया रचनाः प्रकाश्यन्ते। विश्वसंस्कृतस्य विगतकतिपयेष्वंकेष्वद्यावधि डॉ. श्यामदेवपाराशर - प्रणीतस्य 'त्रिवेणी' महाकाव्यस्य द्वाविंशतिसंख्याकास्सर्गाः प्रकाशिताः सन्ति। अपरेऽप्यायत्यां प्रकाशनीयः सन्ति। पत्र-पत्रिकासु प्रकाशितानां रचनानां सूचीनां निर्माणस्य अपेक्षा वर्तते। एतादृशी एका सूची 'अर्वाचीनसंस्कृते १९९२ यावत्प्रकाशिताः लेखा रचनाश्च (डॉ. चन्द्रमौलिः शुक्लः)' इति शीर्षकेण 'अर्वाचीनसंस्कृते' (१५/२, १५.४.१९९३) प्रकाशितास्ति[२२५]। यदि सर्वासां पत्रिकाणां सामग्र्याः सूचीकरणं भवेत्तर्हि शोधार्थिनां कृते सौकर्यं भवेत्। गतमास एव 'अ. भा. संस्कृतपत्रकारसंघस्य' पंजीकरणं संवृत्तम् यस्याध्यक्षः पुण्यनगरवास्तव्यः

'शारदा' कारः पं. वसन्त अनन्त गाडगीळोऽस्ति। आशासे, तस्य यत्नैरिदं कार्यं सम्पत्स्यते।

## सम्मेलन-गोष्ठ्यः

संस्कृत-शोधपत्रपाठार्थमेतस्मिन्नन्तराले नैकानि सम्मेलनानि, नैकाश्च विचारगोष्ठ्यः समायोज्यन्त। वियनायां विश्वसंस्कृतसम्मेलनस्य (WSC) अष्टमे सम्मेलने (अगस्त १९९०), 'टौरेण्टो' इत्यत्र समायोजिते त्रयस्त्रिंशत्तमे। CANAS सम्मेलने व अधिसंस्कृतसाहित्यमनेकैर्विद्वद्भिः शोधपत्राणि पठितानि। हरद्वारे समायोजिते अखिलभारतीयप्राच्यविद्यासम्मेलनस्य पंचत्रिंशत्तमेऽधिवेशने शतशः पत्राणि साहित्यिकसंस्कृत (Classical Sanskrit) विभागे विद्वद्भिः पठितानि। चतुर्णवत्युत्तरैकोन-विशंतिशततमेशवीयेऽब्दे जनवरीमासस्य (९-१५.१.१९९४) नवमदिनांकतः पंचदशदिनांकं यावत् आस्ट्रेलियादेशे समायोज्यमाने विश्वसंस्कृतसम्मेलनस्य नवमेऽधिवशने विद्वद्भिः शोधपत्राणि प्रेषितानि प्रेष्यन्ते च। हागंकांगे आगामिनि अगस्तमासे (१९९३) आयोज्यमाने चतुस्त्रिंशत्तमे। CANAS सम्मेलने समुपस्थातुं नैके संस्कृतसाहित्य-विमर्शकाराः सन्नद्धास्तिष्ठन्ति।

दिल्लीस्थरामजसमहाविद्यालयस्य हीरकजयन्तीमुपलक्ष्य संस्कृतपरिषदा 'संस्कृतसाहित्ये राष्ट्रियैकता' इति विषयमवलम्ब्य त्रिनवत्युत्तरैकोनविंशति-शततमेशवीयेऽब्दे मार्चमासस्य षड्विंश-सप्तविंश-तारिकयोः (२६-२७.३.१९९३) द्विदिवसीया संगोष्ठी आयोजिता। दिल्लीस्थश्रीलालबहादुर-शास्त्री-राष्ट्रिय संस्कृतविद्यापीठेन २४-२५.११.१९९२ तारिकयोः डॉ. विश्वनारायणशास्त्रिणः 'पुराणेषु भारतस्यैकात्म्यम्' 'प्राग्ज्योतिषपुरस्य सांस्कृतिकमवदानम्' चेति विषयमालम्ब्य भाषणद्वयमायोजितम्। उज्जयिन्याः कालिदास-समित्या, कालिदास-अकादेम्या, दिल्लीसंस्कृत-अकादम्या, म. प्र. संस्कृत-अकादम्या, उ.प्र. संस्कृत-अकादम्या, राजस्थान संस्कृत-अकादम्या, मुम्बापुरीस्थदेववाणी-मन्दिरेण, पुरीस्थलोकभाषा-प्रचारसमित्या मैनपुरीस्थ-सुरभारतीसेवासंस्थानेन दिल्लीस्थदेववाणी-परिषदा अन्याभिश्च ताभिस्ताभिः संस्थाभिः संस्कृतसाहित्यपरकाण्या-योजनानि कृतानि। उज्जयिन्यां

कालिदास-समारोहः, दिल्ल्यां पण्डितराज महोत्सवः, ग्वालियरे भवभूतिसंगोष्ठी इत्येतदादिकान्यायोजनानि संस्कृत- साहित्यविमर्शार्थमप्यवसरं ददति।

गान्धिनगरे ७-८.११.१९९२ दिनांकयोः स्वामिनारायणसम्प्रदायेन संस्कृतसम्मेलनमायोजितम्। दिल्लीसंस्कृतअकादमी च १०-१२.६.१९९३ तारिकासु अ.भा. संस्कृतसम्मेलनमायोजयति यस्योद्घाटनं भारतस्य महामहिमराष्ट्रपतिः डॉ. शंकरदयालशर्मा विधास्यति। अत्रापि पत्रवाचनाय समयो निश्चितः।

दिल्ल्यां राज्यशैक्षिकानुसन्धानप्रशिक्षण-परिषदा (SCERT) अध्यापकानां कृते १५-२८.५.१९९२, १-१४.७.१९९२ तारिकासु विचारसंगोष्ठ्यः कार्यशाला श्चायोजिताः यत्र एतत्पंक्तिलेखावेन अर्वाचीनसंस्कृतसाहित्यमवलम्ब्य पंच भाषणानि प्रदत्तानि। अद्यत्वेऽपि परिषदः संगोष्ठ्यः प्रचलन्ति यत्रानेन जनेन २४.५.१९९३ तारिकायां संस्कृतपत्रपत्रिका अवलम्ब्य भाषितम्। रमेशनगर विद्यालयप्राचार्या श्रीमती शशिप्रभागोयलमहाभागा अस्यां दिशि महत्त्वपूर्णं योगदानं करोति।

विद्वांसः

अनेन संक्षिप्तसर्वेक्षणेनेदं सुतरां स्पष्टीभवति यत्संस्कृतसाहित्यस्य शोधसमीक्षाधारा रचनाधारा चाद्यापि सदानीरे स्तः। अस्माकं प्राचीनं संस्कृतसाहित्यं कालजयि वर्तते किन्तु साम्प्रतिकं संस्कृतसाहित्यमपि स्वीयं महत्त्वं दधाति। न तदल्पमप्युपेक्षणीयम्। अस्माकं केचिद्बान्धवाः अर्वाचीनसंस्कृतसाहित्यस्य अस्तित्वमेव स्वीकर्तुं नोत्सहन्ते। अर्वाचीनसंस्कृतं नास्ति प्राचीनसंस्कृतस्य परिपन्थि किञ्चिद्वस्तु, इदं हि तस्याविभाज्यमंगमस्ति। अस्यामेव विंशशताब्द्यां रचितं पुष्कलं संस्कृतसाहित्यं स्वातन्त्र्यपूर्वकाले देशस्य पराधीनताजन्यां पीडां व्यनक्ति। स्वातन्त्र्योत्तरं संस्कृतसाहित्यं देशस्य स्वातन्त्र्यावाप्तौ हर्षं, देशविभाजने पीडां, विकासकार्ये प्रीतिं, कुत्सितराजनीतौ क्षोभं, दीनहीनानां सेवार्थं प्रेरणां, स्वातन्त्र्यवीरान् प्रति कृतज्ञतां, देशसेवकान् प्रति आदरभावं, देशद्रोहिणः प्रति घृणाभावं, भारतस्य, विश्वस्य च मंगलकामनां निदधत् संस्कृतसाहित्ये काममपि

अदृष्टपूर्वां विच्छित्तिं संयोजयति। नवनवानि काव्यरूपाणि, नूतनानां वृत्तानामाविष्करणं, नवनूतनविषयेषु भावोद्‌गिरणम्- एतत्सर्वमपि तदैव प्रत्यक्षं भवितुं शक्यते यदास्मद्विवांसः प्रचीन-संस्कृतसाहित्येन साकमर्वाचीनरचनानामपि अवलोकनं कुर्युः। विश्वविद्यालयेषु तादृशी पाठ्यक्रमयोजना स्याद्यया एम.ए.-आचार्यकक्षीयाश्छात्रा विगतवर्षद्वयान्तराले प्रकाशितस्य प्रणीतस्य वा कस्यापि संस्कृतग्रन्थस्य परिशीलनमनिवार्यत्वेन कुर्युः।

बान्धवाः, नाहमस्मि निराशावादी। आशा हि मम कृते परमं सुखम्। यस्मिन् काले वयं श्वसिमस्तस्मिन् काले संस्कृतं लोकप्रियमस्ति। आकाशवाणी-दूरदर्शनतः संस्कृत-कार्यक्रमाः प्रसार्यन्ते, पौनःपुन्येन प्रसार्यन्ते। न कोऽपि दूरदर्शनद्रष्टा संस्कृतकार्यक्रमान् वीक्ष्य स्व टी.वी.-यन्त्रं मौनभावं गमयति। विदेशेष्वपि अस्माकं संस्कृतकार्यक्रमाः प्रसार्यन्ते। अद्य संस्कृतविदुषां कवीनां च पंच रक्षापंक्तयः-उत्तमवृद्धपंक्तिः, मध्यम-वृद्धपंक्ति, प्रौढपंक्तिः, युवपंक्तिः, किशोरपंक्तिश्च समानोत्साहेन साहित्यचिन्तने काव्यनिर्माणे च संलग्नास्तिष्ठन्ति। एकतोऽद्य आचार्यरमेशचन्द्रशुक्लः, आचार्यबटुकनाथशास्त्री खिस्ते, पं. जग्गूब-कुलभूषणः प्रो. ई.पी. भरत पिषारटिः, आचार्यप्रभुदत्तस्वामी, कविशिरोमणिः अमीरचन्द्रशास्त्री, डॉ. प्रभुदयालु अग्निहोत्री, डॉ. प्रभाकरनारायणकवठेकरः, डॉ. हरिहरत्रिवेदी, डॉ. श्रीधरभास्करवर्णेकरः, आचार्यबच्चूलाल अवस्थी, आचार्यजानकीवल्लभशास्त्री, डॉ. प्रभात-शास्त्री, कविरत्नकृष्णप्रसाद घिमिरे, पं. रामकृष्णशास्त्री 'अव्ययः' इत्येवमादय उत्तमवृद्धाः कवयो दृश्यन्ते, अपरतः श्री.भि. वेलणकरः, डॉ. रुद्रदेवत्रिपाठी, डॉ. सत्यव्रतशास्त्री, डॉ. रामकरणशर्मा, काश्यपो डॉ. रेवाप्रसाद द्विवेदी 'सनातनः', आचार्यश्रीनिवास रथः, डॉ. श्यामदेव पाराशरः, प्रा. हरिश्चन्द्ररेणापुरकरः, डॉ. शिवदत्तशर्मा चतुर्वेदः, डॉ. जी.बी. पलसुले, पं. ओगेटिपरीक्षितशर्मा, गोस्वामी बलभद्रप्रसाद शास्त्री, डॉ. वनेश्वर पाठकः, डॉ. बदरीनाथ कल्ला, इत्येवमादयो मध्यमवृद्धाः कवयो रचनाकर्मणि व्यापृता अवलोक्यन्ते। एकतो डॉ. भास्कराचार्यत्रिपाठी, 'अभिराज' डॉ. राजेन्द्रमिश्रः, डॉ.

प्रेमनारायणद्विवेदी, डॉ. रामकिशोरमिश्रः, श्रीभाष्यम् विजयसारथिः, डॉ. वी. कण्णन्, श्री. सुन्दरराजः, डॉ. पुष्पादीक्षितः, डॉ. नलिनी शुक्ला, डॉ. मनोरमा तिवारी, डॉ. लीना रस्तोगी, डॉ. कृष्णकान्तशुक्लः, डॉ. उमाकान्त शुक्लः, डॉ. विष्णुकान्त शुक्लः, श्रीदेवदत्त भट्टिः, डॉ. पद्म शास्त्री डॉ. शम्भुनाथ आचार्यः, डॉ. रामेश्वरदत्त शर्मा, कविरत्न ओमप्रकाशठाकुरः, डॉ. प्रकाशपाण्डे, श्रीमती वेदकुमारी घई डॉ. कृष्णलालः कृष्णदत्तशर्मा, इत्येवमादयः प्रौढवयसः कवयः कविताः कुर्वन्ति, अपरतो डॉ. राधावल्लभ त्रिपाठी, डॉ. कामताप्रसाद त्रिपाठी, श्री कृष्णसेमवालः, डॉ. हरिदत्तशर्मा, डॉ. विन्ध्येश्वरीप्रसाद मिश्रः 'विनयः' डॉ. इच्छाराम द्विवेदी 'प्रणवः', डॉ. केशवचन्द्रदाशः, डॉ. हर्षदेव माधवः, डॉ. जयदेवजानी 'रसराजः', डॉ. जनार्दनप्रसाद पाण्डेयः 'मणिः', श्री वीरेन्द्रकुमारझा इत्येवमादयो युवानः कवयः कविकर्मसाधनां कुर्वाणा अवलोक्यन्ते। यत्र तत्र कविसम्मेलनेषु कविमुखात् काव्यं श्रावं श्रावं किशोरा अपि काव्यरचनायां प्रवर्तन्ते। यत्सत्यं नात्र सर्वेऽपि कालिदासा माघाः बाणभट्टा वा किन्तु तैरिदं तु सडिण्डिमघोषमुद्घोष्यत एव यदद्यापि संस्कृतं कवीनां सहृदयानां च चेतांसि रंजयितुं क्षममस्ति। अयत्नाद्यत्नाद्वा यशसेऽर्थकृते वा गेयमगेयं वा क्लिष्टं सरलं वा सहृदयैर्ग्राह्यमग्राह्यं वा चारुतरमन्यथा वा काव्यं कुर्वाणानां महति जनसम्मर्दे को नाम कदा वा सत्कविर्भवेदित्यत्र केन सन्दिह्येत? यत्र तत्र नैकाः रचनाः प्रत्यहं प्रकाश्यन्ते। अस्मन्मित्रं राजेन्द्रमिश्रस्तु साम्प्रतिककालमाधुनिकसंस्कृतसाहित्यस्य समृद्धिकालं मन्यते। वयमपि विंशीं शताब्दी संस्कृतसाहित्यस्य स्वर्णकालं मन्यामहे। अस्मिन् सूचनायुगे संस्कृतज्ञैस्तदनुरागिभिश्च संस्कृतचलच्चित्राणामपि निर्माणं क्रियते। सद्य एव श्रीअय्यरस्य 'भगवद्गीता' चलच्चित्रं फिल्मपुरस्कारं लेभे। इतः पूर्वमपि तस्य 'आदिशंकराचार्य' इति चलच्चित्रं पुरस्कृतमभूत्। अवश्यमेवास्माभिराशा कर्तव्या यद् युगानुरूपं वयमपि संस्कृतरचना दृश्यश्रव्यमाध्यमैरपि विश्वप्रसृताः करिष्याम इति।

सुहृदो विद्वांसः,

श्रीमदम्बिकादत्तव्यासेन 'शिवराजविजय'स्य पंचमे निःश्वासे लिखितमासीत्-'इतस्तु दृश्यतां किं भवति पुण्यनगर' इति।[२२६] इदं वर्षं (२०५० वि. १९९३ ई.) शिवराजविजयस्त पूर्तेः शताब्दीवर्षम्। अद्यापीदं जिज्ञास्यते विद्वज्जगति 'इतस्तु दृश्यतां किं भवति पुण्यनगर' इति। आशासे यद्यदत्र भवति, भविता च तेन संस्कृतसाहित्यस्य श्रीवृद्धिर्भविष्यति। स्थालीपुलाकन्यायेन एभिरेव शब्दैः स्ववक्तव्यमुपसंहरन्नहमत्रभवतो ऽत्र भवतीश्च शोधपत्रवाचनार्थं' तद्विमर्शनार्थं च सादरमाह्वयामि। साहित्यकाराणां कृते मया पूर्वोक्ताः पंक्तय एवात्रोपह्रियन्ते-

**सत्यनिष्ठा जयेल्लेखनी निर्भया निर्भया वाग् जयेल्लोकसंरक्षिणी।**
**साधुभावस्तथा ज्ञानपूतो जयेन्नूतने वत्सरे ते भवेन्मंगलम्॥**[२२७]

भाण्डारकरप्राच्यसंशोधनसंस्थानम्, पुणे
B.O.R.I., PUNE (INDIA)
२८.५.१९९३

विद्षागश्रवः
रमाकान्त शुक्लः

## सन्दर्भाः

१. Contribution of Maharastra to Sanskrit and Sanskrit Studies. Dr. Prabhakar Machwe. First International Sanskrit Conference, Ministry of Education and cultural Welfare 1975 P.p. 319-334

२. चारुचरितचर्चाः रामचन्द्र नारायण दाण्डेकरः, ले. आचार्यरमेशचन्द्र शुक्लः। प्रकाशकः सुधा कमल ग्रन्थालयः, २९३, उत्तरी गाँधी कालोनी मुजफ्फरनगर-२५१००१, १९७७ पृ. २८५

३. सम्पूर्णानन्द सं. वि. वि. वाराणसी १९९२

४. विजय प्रकाशन मन्दिर जी-२१/७६, कमच्छा वाराणसी १९९१

५. जय भारत साधु महविद्यालयः हरिद्वार-१९९२

६. ईस्टर्न बुक लिंकर्स दिल्ली-११०००७, १९९१

७. सं. सं. वि. वि. वाराणसी, १९९०

८. Agam Kala Prakashan, Delhi, 1990
९. सं. सं. वि. वि. वाराणसी-१९९२
१०. भारतीय विद्या प्रकाशन-१९९२
११. Bankey Bihari Prakashan, Agra-3, 1990
१२. गुजरात साहित्य अकादमी, गांधी नगर-१९९०
१३. प्रतिभा प्रकाशन, दिल्ली-१९९२
१४. परिमल पब्लिकेशन्स, दिल्ली-११०००७, १९९१
१५. देववाणी-परिषद्, दिल्ली, आर-६, वाणी विहार, नयी दिल्ली-५९, १९९१
१६. मयंक प्रकाशन, मिश्रा बाग, हनुमान गढ़ी, कनखल, हरिद्वार-१९९२
१७. Eastern Book Linkers, Delhi-110007, 1991
१८. Brijrani Publications, 726, Seth Bhika Chand, Chhatta Bazar, Mathura, 1991
१९. नाग प्रकाशकः ११ ए/यू.ए., जवाहर नगर, दिल्ली-११०००७, १९९१
२०. अनिल प्रकाशन, ७ बी, आर.एफ., बहादुर जी मार्ग, लखनऊ-१, १९९१
२१. The Author, 1991
२२. परिमल पब्लिकेशन्स, २७/२८, शक्ति नगर, दिल्ली-११०००७, १९९२
२३. E.B.L. Delhi-110007, 1991
२४. Amar Publications, A-1/139 B, Lawrance Road, Delhi-110035, 1991
२५. सावित्री प्रकाशन, सावित्री सदन, मीठापुर, बी एरिया, पटना-८०००००१, १९९१
२६. श्री पब्लिशिंग हाउस, १०/४९, कटरा छज्जू पंडित, माडल बस्ती, नई दिल्ली-११०००५ द्वितीय संस्करण १९९२
२७. भारतीयवाङ्मयेषु रामकथावर्णनम् आचार्य आद्याचरण झा, प्रकाशकः इन्द्रकलाझान्याससमितिः, मंगरौनी-मधुवनी-८४७२११, १९९२
२८. भारतीय महाकाव्य, सं. नगेन्द्र, प्रभात प्रकाशन, १९९२, दिल्ली-७
२९. तत्रैव रामायण-वाल्मीकि, रामाश्रय शर्मा पृ. २७-४६
३०. तत्रैव महाभारत-वेदव्यास, वाचस्पति उपाध्याय, २४५-२५९
३१. तत्रैव रघुवंश-कालिदास, रमाकान्त शुक्ल, ४७-५६
३२. तत्रैव नैषधीयचरितम्, श्रीहर्ष, रमाकान्त शुक्ल, २८१-२८९

३४. प्रभाकरनारायणश्रीः सम्पादक-डॉ. सुषमा कुलश्रेष्ठ, डॉ. सत्यपाल नारंग, प्रतिभा प्रकाशन, नई दिल्ली, १९९३

३५. प्रभाकरनाराणश्रीः पृ. २७०-२७२

३६. तत्रैव, पृ. २७३-२८४

३७. तत्रैव, पृ. २८५-२९७

३८. तत्रैव, पृ. २९८-३११

३९. तत्रैव, पृ. ३१२-३१७

४०. तत्रैव, पृ. ३१८-३२४

४१. तत्रैव, पृ. ३२६-३२८

४२. तत्रैव, पृ. ३२९-३३८

४३. सत्यसुधा, ले. डॉ. सत्यव्रत वर्मा, ईस्टर्न बुक लिंकर्स, दिल्ली-११०००७, १९९३

४४. कालिदासश्रीधरी (Dr. Shridhar Vasundev Sohoni Felicitation Volume), प्रधान सम्पादक, डॉ. सुषमा कुलश्रेष्ठ, सह सम्पा. डॉ. चन्द्रकान्त शुक्ल, डॉ. आनन्द कुमार श्रीवास्तव, डॉ. उर्मिला श्रीवास्तव पृ. सं. ५२६, ईस्टर्न बुक लिंकर्स दिल्ली-११०००७, १९९३

४५. देववाणी-सुवासः, प्रधानसम्पादकः, 'अभिराज' डॉ. राजेन्द्र मिश्रः, प्रबन्ध सम्पादकः, डॉ. चन्द्रमौलि शुक्लः। प्रकाशक, 'डॉ. रमाकान्त शुक्लाभिनन्दन-ग्रन्थसमिति' - कृते देववाणी-प्रकाशनम्, आर ६, वाणी विहारः, नई दिल्ली-११००५९, १९९३

४६. द्र. देववाणी-सुवासः पृ. ३.००१ - ३.११६

४७. द्र. तत्रैव, पृ. ४.००१ - ००६

४८. द्र. तत्रैव, पृ. ४.०४४ - ०६१

४९. द्र. तत्रैव, पृ. ४.०६२ - ०६४

५०. द्र. तत्रैव, पृ. ४.०६५ - ०६७

५१. द्र. तत्रैव, पृ. ४.०६८ - ०७४

५२. द्र. तत्रैव, पृ. ४.०८२ - ०९१

५३. द्र. तत्रैव, पृ. ४.०८२ - १०८

५४. द्र. तत्रैव, पृ. ४.११७ - १२७

५५. द्र. तत्रैव, पृ. ४.१४१ - १५७

५६. द्र. तत्रैव, पृ. ४.१४१ - १५७
५७. द्र. तत्रैव, पृ. ४.१५८ - १६४
५८. द्र. तत्रैव, पृ. ४.१८७ - १९७
५९. द्र. तत्रैव, पृ. ४.१९८ - २००
६०. द्र. तत्रैव, पृ. ४.२४५ - २५४
६१. द्र. तत्रैव, पृ. ५.११७ - १३५, ५६६९ - ६७२, ५.४५७
६२. द्र. तत्रैव, पृ. ५.११३ - १४७, ५.४८७
६३. द्र. तत्रैव, पृ. ५.१६१
६४. द्र. तत्रैव, पृ. ५.१६५
६५. द्र. तत्रैव, पृ. ५.१८१
६६. द्र. तत्रैव, पृ. ५.१८४
६७. द्र. तत्रैव, पृ. ५.१९५ - २३२
६८. द्र. तत्रैव, पृ. ५.०५९ - ०७९, ५.४०८ - ४१५, ५.४३९ - ४४७
६९. द्र. तत्रैव, पृ. ५.३६८ - ४०५
७०. द्र. तत्रैव, पृ. ५.४९८ - ५१३
७१. द्र. तत्रैव, पृ. ५.२९९ - ३०१, ५.४०५ - ४०७
७२. द्र. तत्रैव, पृ. ५.२९४ - २९८, ५.४०५ - ४०७
७३. द्र. तत्रैव, पृ. ५.४७५
७४. द्र. तत्रैव, पृ. ५.३०२ - ३१२
७५. द्र. तत्रैव, पृ. ५.०२६ - ३१, ५.०३५ - ५८, ५.४६६, ५.४१३ - ४३८ आदि
७६. द्र. तत्रैव, पृ. ५.७१० - ७८६
७७. द्र. तत्रैव, पृ. ५.४४२ - ४४७, ५.५८७ - ७०९
७८. द्र. तत्रैव, पृ. ५.८११ - ८१६
७९. अस्य ग्रन्थस्य सम्पादको डॉ. सत्यपाल नारंगोऽस्ति
८०. अस्य ग्रन्थस्य सम्पादको डॉ. राजेन्द्र नाणावटी अस्ति
८१. अस्य ग्रन्थस्य सम्पादको डॉ. सत्यपाल नारंगोऽस्ति
८२. १९९३ ईशवीयेऽब्दे प्रकाशितः
८३. देवयानी (नाटिका) ले. प्रकाशकः डॉ. रामकिशोर मिश्रः संस्कृत विभागाध्यक्षः महामना मालवीय महाविद्यालयः, खेकड़ा-२०११०१, १९९२

८४. मधुलिप्सा वासुदेव आचार्यः प्रकाशकः, लोकभाषाप्रचारसमितिः शरधावालि, पुरी-७५२००२, १९९१

८५. मेघदूतान्वितम् (गीतनृत्यनाटकम्), श्री. भि. वेलणकरः देववाणी मन्दिरम्, मुम्बई ४००००४, १९९१

८६. दिल्लीपरिदेवनम् (ऐतिहासिकनाटकम्), 'अभिराज' डॉ. राजेन्द्र मिश्रः, संस्कृतमञ्जर्यां, प्रकाशितम् १९९२

८७. नाट्यसप्तकम् (ध्वनिनाट्यसंकलनम्), डॉ. रमाकान्त शुक्लः, देववाणी- परिषद्, दिल्ली, आर ६ वाणी विहारः, नई दिल्ली ११००५९, १९९२

८८. सत्प्रेरणानाटकम्, डॉ. इच्छाराम द्विवेदी, "प्रणवः" देववाणी-परिषद् दिल्ली १९९३ (प्रकाशनाधीनम्)

८९. प्रका. भारतीयविद्याप्रकाशन, बैंग्लो रोड, दिल्ली-११०००७, १९९०

९०. नाट्यत्रयी (विडम्बना, प्रणयविच्छेदः, कण्वाश्रमः)-रामकृष्ण शर्मा। प्रका.- नाग प्रकाशक, ११ यू.ए. जवाहर नगर, दिल्ली-७, १९९३

९१. चाण्डालिका, प्रणेता-डॉ. वनेश्वर पाठकः, प्रकाशकः, ज्योति संगम पथ, अपर बाजार, राँची-८३४००१, १९९०

९२. विक्रांतकर्णम्, वनेश्वर पाठकः ज्योतिः, राँची-१९९०

९३. श्रीरामकीर्तिमहाकाव्यम्, प्रणेता–सत्यव्रत शास्त्री, प्रका. मूलामल सचदेव प्रतिष्ठानम् अमरनाथ सचदेव प्रतिष्ठानम्, बैंकाक, १९९०

९४. तत्रैव १९/३८-३९

९५. दूताञ्जनेयम् (महाकाव्यम्), प्रणेता–"गोस्वामी", डॉ. बलभद्रप्रसाद शास्त्री, भूमिकालेखकः–डॉ. कृष्णकान्त शुक्लः, हिन्दीभाषानुवादकारः राजकमल गोस्वामी, प्रकाशकः–वाग्देवता प्रकाशन १४, अशोक नगर बरेली (उ.प्र.), १९९३

९६. भीष्मचरितम्, रचयिता, डॉ. हरिनारायण दीक्षितः प्रका., ईस्टर्न बुक लिंकर्स, ५८२५, न्यू चन्द्रावत, जवाहर नगर दिल्ली-११०००७, १९९१

९७. संस्कृत साहित्य में राष्ट्रिय भावना, डॉ. हरिनारायण दीक्षित, देववाणी-परिषद् दिल्ली, ६ वांणी विहार नई दिल्ली-५९, १९८४

९८. भीष्मचरितम् १/१२

९९. भीष्मचरितम् १/२०-२९

१००. निर्माणाधीनं महाकाव्यम् श्रीनेहरूचरितम्, डॉ. रमाकान्त शुक्लः, अर्वाचीनसंस्कृतम् ३/४, १५ अक्टू. १९८१ पृ. सं. २१७-२२८

१०१. श्रीनेहरूरितमहाकाव्यम्, (श्रीनेहरूमहोदयानाम्आत्मकथायाः संस्कृतपद्यानुवादः), मूललेखकः पंडित जवाहर लाल नेहरूः, प्राक्कथनम्-महामहिमरामस्वामि-वेंकटरामनमहोदयाः भारतराष्ट्रपतयः, अनुवादकः कविरत्नम् अमीरचन्द्र शास्त्री, प्रधानसम्पादकः डॉ. श्रीधरवासिष्ठः, प्रकाशकः कुलसचिवः श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृतविद्यापीठम्, शहीदजीतसिंह मार्गः, कटवारिया सरायः, नई दिल्ली-११००१६, १९९०

१०२. सुदामचरितम्-डॉ. इन्द्रदेव द्विवेदी 'इन्द्रः' प्रकाशक-काशीनाथ द्विवेदी, भारतीय साहित्य परिषद्, गोमती नगर, लखनऊ, १९९२

१०३. शिववीरचरितम् (महाकाव्यम्) प्रणेता - कृष्णदत्त शर्मा शास्त्री, प्रका. दी शार्प प्रिण्टर्स, सुभाष बाजार मेरठ, १९९३

१०४. स्वराज्यसम्भवम्, रचयिता, सनातनः काश्यपो रेवाप्रसाद द्विवेदी वाराणसी १९९२

१०५. प्रका. काल प्रकाशनम्: १४०४, सदाशिव पेठ, पुणे ४११०३०, १९९२

१०६. महात्मायनम् - कविः केदारः तथा गंगाधर विष्णु ठेकेदारः प्रका. जयदीप प्रकाशनं, १०५ नारायण पेठः, पुणे-४११०३०, २.१०.१९९१

१०७. प्रका. लेखक एव

१०८. नाग प्रकाशकः दिल्ली-११०००७, १९९२

१०९. अम्बिका प्रकाशन, बैरक्स, १४५१/१, उल्हास नगर, ४२१००४, १९९०

११०. विच्छित्तिवातायनी - डॉ. जगन्नाथ पाठकः, डॉ. अनिल कुमार पाठकः मु. कोटा टोली, सासाराम, जि. रोहतास (बिहार) १९९१

१११. तत्रैव, पृ. २१३

११२. तारुण्यशतकम्, प्रणेता - क्षीरोदचन्द्रदाशः, प्रका. कटकस्थविद्यापुरी प्रकाशनसंस्थापक्षतः श्रीपीताम्बरमिश्रशर्मणा प्रकाशितम् १९९१

११३. तत्रैव, पद्यसंख्या १००

११४. तत्रैव पद्यसंख्या १०१

११५. अहं राष्ट्री, प्रणेता - विशन लाल गौड़ः 'व्योमशेखरः' प्रका. लोकालोक, प्रकाशन, १५६ श्याम पार्क, साहिबाबाद-२०१००५, १९९०

११६. तत्रैव ११६

११७. पञ्चशती, विद्यासागर, प्रका. ज्ञानगंगा ३० डिप्टी गंज, सदर बाजार, दिल्ली-११०००६, १९९१

११८. प्रका. प्रबोध संस्कृत - प्रकाशनम्, हरमू राँची १९९१

११९. प्रका. शिक्षक प्रकाशक, १०४/१९४ प्रेम नगर, कानपुर-१, १९९१

१२०. पञ्चकुल्या - 'अभिराज' राजेन्द्र मिश्रः १९९३

१२१. भीमशतकम् - श्रीकृष्ण सेमवालः - दिल्ली संस्कृत, अकादमी, १९९१

१२२. मित्रदूतम् - डॉ. इच्छाराम द्विवेदी 'प्रणवः', प्रका. सुरभारतीसेवासंस्थानम् १६७/१२ पंजाबी कालोनी, मैनपुरी-२०५००१, १९९२

१२३. मित्रदूतम्, १-२, पृ. १-२

१२४. तदेव, ४९, पृ. २५

१२५. अभिनवमेघदूतम् - वसन्त त्र्यम्बक शेवड़े, सम्पा. डॉ. ब्रह्मानन्द त्रिपाठी, प्रका. चौखम्बा सुरभारती प्रकाशन, वाराणसी १९९०

१२६. वनेश्वर पाठकः प्रका. ज्योतिः, राँची, १९९०

१२७. तत्रैव, उत्तरो भागः ६३-६६, पृ. ५१-५२

१२८. मृत्कूटम् (मानवशतकम्), रचयिता, डॉ. भास्कराचार्य त्रिपाठी, प्रका. श्री गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्, इलाहाबादः १९९२

१२९. मृत्कूटम्, १००, पृ. ५०

१३०. तदेव, ३८, पृ. १९

१३१. तदेव, ३९, पृ. २०

१३२. तदेव, ९३, ९४, पृ. ४७

१३३. सटीकम् अक्कमहादेवीशतकम् - डॉ. परड्डी मल्लिकार्जुनः १९९२

१३४. सटीकं गंगाधरशतकम्, - डॉ. परड्डी मल्लिकार्जुनः प्रका. श्रीजगद्गुरुगंगाधर धर्मप्रचारकमण्डलम्, मूरूसाविरमठः, हुब्बली-५८००२० दिसम्बर १९९२

१३५. राजनीतिलीलाशताधिकम् प्रणेता डॉ. दीपक घोष, प्रका. देववणी-परिषद्, दिल्ली, १९९२

१३६. तत्रैव, पद्य सं. २

१३७. तत्रैव, पद्य सं. १००

१३८. तत्रैव, पद्य सं. ८५-८९

१३९. मंगलं भारतम्, प्रणेता, डॉ. चन्दनलाल पाराशरः। प्रकाशकः, सुधा प्रकाशन आगरा, २.१०.१९९१

१४०. भाति मे भारतम्, - रमाकान्त शुक्लः प्रका. देववाणी-परिषद्, दिल्ली ६ वाणी विहार नई दिल्ली ११००५९, द्वितीयं संस्करण

१४१. संघगीता (मराठी भाषान्तर सहिता), ले. श्रीधर भास्कर वर्णेकर-"प्रज्ञाभारती" प्रका. मनोहर कथा प्रकाशन, मुजुमदार बंगला, पोस्ट आफीसचे मार्ग, गिरी पेठ नागपूर १०, १९९२

१४२. वीणा, - डॉ. रामकरण शर्मा, प्रका. - नाग प्रकाशक ११ए / यू.ए., जवाहर नगर दिल्ली-११०००७, १९९०

१४३. दीपिका, - रामकरण शर्मा, प्रका. - शारदा पब्लिशिंग हाउस दिल्ली-११००५२, १९९२

१४४. दीपिका, पृ. २४

१४५. षोडशी, संकलयिता सम्पादकश्च राधावल्लभ त्रिपाठी, प्रका. साहित्य अकादमी ३५ फीरोजशाह रोड नई दिल्ली-११०००१, १९९२

१४६. गीतिमञ्जरी, कविरत्नम् ओम्प्रकाशठाकुरः, प्रका. - देववाणी-परिषद्, दिल्ली, ६ वाणी विहारः नयी दिली-११००४९, १९९२

१४७. इन्द्रधनुः, कविरत्नम् ओम्प्रकाशठाकुरः, डी-७५७ सरस्वती विहारः, दिल्ली, १९९३

१४८. नवरत्नम्, प्रो.ई.पी. भरतपिशारटिः प्रकाशकः, कामधेनु पब्लिकेशन्स पो.ओ., एरनेल्लूर ६८०५०१ (केरल)

१४९. तत्रैव पृ. १३७

१५०. तत्रैव पृ. १३८

१५१. गीतमन्दाकिनी - डॉ. इच्छाराम द्विवेदी 'प्रणवः' प्रका. - नाग प्रकाशक-दिल्ली-११०००७, १९९२

१५२. अर्चनम् (संस्कृतकाव्यसंग्रह), कवयित्री - प्रा. डॉ. उमा देशपाण्डे, विश्व संस्कृत प्रतिष्ठानम् गुर्जर प्रदेश, शाखा, श्री अरविन्द निवासः, दांडिया बाजार, वटोदरम्-३९०००१, १९९२

१५३. अर्चनम् पृ. ५३

१५४. मंगलानक्षत्रम् - प्रणेता - शुकदेव शर्मा, 'मुनिः', प्रकाशकः - वात्स्य, प्रकाशन - नई बस्ती, सिनेमा रोड, नाभा-१४७२०१, १९९१

१५५. मङ्गलानक्षत्रम् (मुनेस्तृषा), पृ. ५०

१५६. अर्वाचीनसंस्कृतम् (१५/२) कृष्णाश्वधाटी, डॉ. भास्कराचार्य त्रिपाठी सम्पादकः रमाकान्त शुक्लः

१५७. (अश्वधाटीघटा)-सम्पादकः डॉ. विनोदराव पाठकः, प्रका. शारदा प्रकाशन संस्थान, शारदा भवन डी ३६/४४, अगस्त्य कुण्ड, वाराणसी-२२१००१

१५८. लहरीदशकम् राधावल्लभः, प्रका. संस्कृतपरिषद्, सागरविश्वविद्यालयः, सागरम्-४७०००३, १९९१

१५९. राष्ट्रियमैक्यम् - सम्पा. डॉ. मुहम्मद इसराइल खाँ, प्रका. कालिदास एण्ड मैक्समूलर इण्टरनेशनल संस्कृत सोसायटी एफ/डी ५६, नया कविनगर, गाजियाबाद, १९९३

१६०. ईशा-विद्वन्मणिः केशवचन्द्रदाशः, प्रकाशिका श्रीमती सुभद्रादाश, पुरी १९९२

१६१. अलकनन्दा (१९९०), शब्दानां निर्मक्षिकेषु ध्वंसावंशेषेषु (१९९३)-डॉ. हर्षदेव माधवः, पार्श्व प्रकाशन, अहमदाबाद-३८०००७

१६२. विग्नदेईमन् - डॉ. प्रकाश पाण्डे, नागपुर

१६३. हनुमत्सुप्रभातम् - 'कविरत्न' श्रीकृष्ण सेमवालः, प्रका. - कालीशिला प्रकाशनम्, ८२ डी. डी. ए. फ्लैट्स, फेज २, मस्जिद मोठ, नयी दिल्ली-११००४८

१६४. तत्रैव, पद्यम् ४९ पृ. १३

१६५. श्रीहनूमत्पंचाशत् शरणागतिषोडशी च- श्री. सुन्दरराजः, प्रका. देववणी- परिषद्, दिल्ली आर-६, वाणीविहारः, नयी दिल्ली-११००५९, १९९२

१६६. दूर्वा (कुम्भकलिका-विशेषांकः) सम्पादकः डॉ. भास्कराचार्य त्रिपाठी, प्रका. मध्य प्रदेश संस्कृत अकादमी, भोपाल (म.प्र.), १९९२

१६७. सरिता (संस्कृतकथामुक्तावलिः)- आचार्यकेशवशर्मा शास्त्री, प्रका. संस्कृतशोधसंस्थानम्, भारतीविहारः, मशोबरा, शिमला-१७१००७, १९९०

१६८. महान्-डॉ. केशव शर्मा चन्द्रदाशः, प्रका. लोकभाषा प्रचारसमितिः पुरी, १९९१

१६९. एकदा-डॉ. केशवचन्द्र दाशः प्रका. लोकभाषा प्रचारसमितिः, पुरी १९९१

१७०. मधुयानम् (१९९०) विसर्गः (१९९२) विद्वन्मणि डॉ. केशवचन्द्र दाशः, प्रका. लोकभाषा प्रचार समितिः, पुरी

१७१. बालैकविंशतिः-मधुर शास्त्री, प्रका. शारदा प्रकाशन, अंसारी रोड, दरियागंज, नयी दिल्ली-११०००२, १९९२

१७२. वाणीघटकमेलकम् 'अभिराज' डॉ. राजेन्द्र मिश्रः

१७३. श्वेतविप्लुतम् - डॉ. मधुसूदन मिश्रः

१७४. कोमलकण्टकावलिः डॉ. प्रशस्यमित्र शास्त्री, हिन्दीपद्यानुवादकार-डॉ. रमापति मिश्र, अक्षयवट प्रकाशन, २६ बलरामपुर हाउस, इलाहाबाद-२११००२, १९९०

१७५. स्वेतम् - डॉ. मधुसूदन मिश्रः, तारा प्रकाशन, बी ३० उत्तरांचल, फ्लैट ५, पटपड़गंज, दिल्ली-११००९२

१७६. छन्दस्कलावती-डॉ. रामकिशोर मिश्रः, खेकड़ा (मेरठ) २०११०१, १९९१

१७७. रसरंग-संयोजक प्रो. मूँगाराम त्रिपाठी, १९३ अरेरा कालोनी, भोपाल १६, २ मई १९९३

१७८. गढ़वाली महाभारत (गढ़वाली हिन्दी पद्यानुवाद) अनुवादकर्त्ता-आदित्यराम दुदपुड़ी, प्रका. शिव सत्संग कुटीर, सैजमल्ला, पो. आ. डाडा मण्डी, गढ़वाल-२४६१२४, १९९२

१७९. गढ़वाली रामैण-लेखकः प्रकाशकश्च १७८ वत्।

१८०. गढ़नीतिशतकम्-लेखकः प्रकाशकश्च १७८ वत्।

१८१. गढ़चाणक्यनीतिः-लेखकः प्रकाशकश्च १७८ वत्।

१८२. गढ़विदुरनीतिः-लेखकः प्रकाशकश्च १७८ वत्।

१८३. शिवसंकल्पादि पन्द्रह उपनिषद्-लेखकः प्रकाशकश्च १७८ वत्।

१८४. गढ़गीता (गीता सतसई)-लेखकः प्रकाशकश्च १७८ वत्।

१८५. मेघदूतानुशीलनम्-डॉ. कृष्णकुमार, प्रका. मयंक प्रकाशन, कनखल, १९९२

१८६-१९०. संस्कृत साहित्य में प्रहसन- डॉ. राधावल्लभ त्रिपाठी, कु. नीलम अग्रवाल, प्रका. अक्षयवट प्रकाशन, इलाहाबाद-२११००२२, १९९२

१९१. द्रष्टव्या पादटिप्पणी-१७४

१९२. यात्रा के पड़ाव (भर्तृहरिशतक का काव्यरूपान्तर) - डॉ. जयनारायण कौशिक, प्रका. साहित्य सहकार, ई १०/४ कृष्णनगर, दिल्ली-११००५१

१९३. द्र. देववाणी-सुवासः, सम्पा. 'अभिराज' डॉ. राजेन्द्र मिश्र, देववाणी प्रकाशनम्, आर ६ वाणी विहारः नयी दिल्ली-११००५१, १९९३ पृ. ५.१०९-११६

१९४. भारतीय कविताएँ, १९८६ सम्पादक बालस्वरूप राही, भारतीय ज्ञानपीठ, नयी दिल्ली ११०००३, १९९० 'भारतीय कविताएँ: १९८९-९०-९१' इति ग्रन्थोऽद्यत्वे मुद्रणाधीनोऽस्ति। पृ. २३१-२४४

१९५. विश्वसंस्कृतसूक्तिकोशः (भाग १-३) सम्पादकः महोपाध्यायललितप्रभसागर, प्रका. गर्ग एण्ड कम्पनी, जालोरी गेट, जोधपुर (राज.), १९९०

१९६. ऋतम्भरा-लेखकः प्रकाशकश्च-लछमनसिंह अग्रवालः ५४/१ सिही गेट, बल्लवगढ़-१२१००४

१९७. सुभाषितरत्नभाण्डागारम् - पुनर्मुद्रयिता - ईस्टर्न बुक लिंकर्स, दिल्ली १९९१

१९८. संस्कृतवाङ्मयकोशः (तृतीयः खण्डः) सम्पा. - डॉ. श्रीधर भास्कर वर्णेकरः 'प्रज्ञाभारती' भारतीय भाषा परिषद्, ३६ ए, शेक्सपीयर सरणि, कलकत्ता-७०००१७, १९९२

१९९. दिल्लीविश्वविद्यालय संस्कृतविभागे रीडरपदं समलंकुर्वाणो डॉ. सत्यपालनारंगोऽस्मिन् कार्ये अनेकेभ्यो वर्षेभ्यो व्यापृतोऽस्ति।

२००. सौन्दरनन्दं महाकाव्यम् (विमला-टीका), सं. डॉ. जगदीशचन्द्रमिश्रः, चौखम्बा सुरभारती प्रकाशन, वाराणसी, १९९१

२०१. चौरपंचाशिका-सं. डॉ. कृष्णकुमार, मयंक प्रकाशन, मिश्रा बाग, कनखल हरिद्वार, १९९१

२०२. पंचतन्त्रम् ('ज्योत्स्ना'-'मृदुला' - संस्कृत-हिन्दी-टीकोपेतम्) सं. डॉ. सुधाकर मालवीयः, कृष्णदास अकादमी, वाराणसी, १९९०

२०३. सौन्दर्यलहरी (लक्ष्मीधरा-सौभाग्यवर्धनी-अरुणा-मोदिनी-आनन्द गिरीया-तात्पर्यदीपनी-पदार्थचन्द्रिका-डिण्डिमभाष्य-गोपालसुन्दरी-आनन्दलहरी-कैवल्यवर्धिनी-टीकायुता), नाग प्रकाशन, दिल्ली, १९९१

२०४. साम्बपंचाशिका (टीका, विवृतिः) सं. म. म. गोपीनाथ कविराज। सं. सं. वि. वि., वाराणसी, १९९२

२०५. जानकीहरणम् (आशुबोधिनी) सं. आचार्य भालचन्द्र पाण्डेय, कृष्णदास अकादमी, वाराणसी, १९९१

२०६. विरूपाक्षपंचाशिका (टीका, विवृतिः) सम्पा - म. म. गोपीनाथ कविराजः। सं. सं. वि. वि., वाराणसी, १९९२

२०७. कृष्णाकुतूहलम्, सम्पा. - पं. श्री हरिशंकर ओझा, सं. सं. वि. वि., वाराणसी, १९९०

२०८. महाभारततात्पर्यप्रकाशः सम्पा. - रत्ना पब्लिकेशन्स, बी २१/४२ए कमच्छा, वाराणसी-२२१०१०, १९९२

२०९. हितोपदेशप्रवेशः (सरल-संस्कृत-व्याकरण-संवलितः), संग्रहकर्ता, सम्पादकः -डॉ. शम्भुदत्त जोशी। प्रका. विश्वेश्वरानन्द वैदिक शोध संस्थानम् दिल्ली शाखा, हंसराज कालेजः, दिल्ली-११०००७, १९९१

२१०. Yadavabhyudaya (Mahakavya of Sri Vedantadesika) - Dr. N.V. Vasudevachariar., K.C. Publishers, Delhi, 1992

२११. क्षमापणसहस्रम्- सम्पा.-पूवत्तूर रामकृष्ण पिल्लै, प्रका.-अनिता पब्लिकेशन्स, प्रशान्त नगर, तिरुवनन्तपुरम्-६९५००१, १९९२

२१२. साहित्यसन्दर्भः डॉ. शिवजी उपाध्याय, प्रका. श्रीमती मीरा उपाध्याय, १४ अध्यापक आवास, सं. सं. वि. वि. वाराणसी-२, १९९०

२१३. भारतीय काव्यशास्त्र के नये आयाम (प्रथम भाग रससिद्धान्त)-डॉ. मनोहर काले

२१४. पाश्चात्त्यकाव्यशास्त्रम् - ज्ञानचन्द्र शास्त्री, प्रका. जयभारत साधुमहाविद्यालयः हरिद्वारम्, १९९२

२१५. एकावली- डॉ. सत्यव्रत शास्त्री

२१६. संक्षिप्तनाट्यशास्त्रम्-डॉ. राधावल्लभ त्रिपाठी

२१७. काव्यप्रकाशः (चण्डीदासकृतया दीपिकाटीकया विभूषितः) - सम्पादकः - आचार्य रामगोविन्द शुक्लः, वाराणसी (द्वितीयं संस्करणम्) १९९१

२१८. श्रीभरतमुनिप्रणीतं नाट्यशास्त्रम् सम्पा. डॉ. पारसनाथ द्विवेदी, सं. सं. वि. वि. वाराणसी, १९९२

२१९. भरतमुनि साहित्यशास्त्र के आदि आचार्य - डॉ. रमेश कुमार पाण्डेय, प्रका. २१८९ वत् १९९२

२२०. भक्तिदर्शनविमर्शः - डॉ. गोविन्दचन्द्र पाण्डेयः, प्रका. २१८ वत् १९९१

२२१. पंचमी साहित्यविद्या- ले. प्र. बटोही झा, केन्द्रीयसंस्कृतविद्यापीठम्, लखनऊ

२२२. मेघदूतसंगीतपल्लवी - डॉ. सुषमा कुलश्रेष्ठ, प्रका. ईस्टर्न बुक लिंकर्स, दिल्ली-७, १९९०

२२३. ऋतुसंहारसंगीतसुरभिः- लेखिका प्रकाशकश्च २२२ वत्, १९९२

२२४. द्रष्ट.: 'देववाणी-सुवासः' पृ. ५.३४६-३७५

२२५. डॉ. अर्वाचीनसंस्कृतम् (१५/२) सम्पादकः डॉ. रमाकान्त शुक्लः, १५.४. १९९३ पृ. १-२८

२२६. शिवराजविजयः (पंचमो निःश्वासः) प्रणेता- श्रीमदम्बिकादत्त व्यासः। प्रका. कृष्णकुमार व्यासः, व्यास पुस्तकालयः, डी १६/१४ सोमेश्वर गली, मानमन्दिर काशी। चतुर्थं संस्करणम्, १९१

२२७. उत्तरमंगलम्, रमाकान्त शुक्लः अर्वाचीनसंस्कृतम् (१२/१) १५.१.१९९० पृ. ४

# अर्वाचीनसंस्कृतसाहित्यसर्वेक्षणम्
# (१९९७-९८)

## (अ०भा० प्राच्यविद्यापरिषदो बड़ौदानगरे समायोजिते एकोनचत्वारिंशेऽधिवेशने अर्वाचीनसंस्कृतसाहित्यानुभागे प्रदत्तमध्यक्षीयं भाषणम्)

अखिलभारतीयप्राच्यविद्यापरिषद: एकोनचत्वारिंशत्तमेऽधिवेशने अर्वाचीन-संस्कृतसाहित्यानुभागे समवेता विद्वांस:, संशोधनकर्त्तार:, कवय:, समीक्षका: संस्कृतानुरागिणश्च,

बड़ौदानगरस्थ महाराजा सैयाजीराव विश्वविद्यालयस्य प्राच्यविद्यासंस्थानेन समायोजितेऽस्मिन्नधिवेशने अर्वाचीनसंस्कृतकवितापरकं भाषणं विशिष्य प्रासग्कितां निदधाति। विंशशताब्द्या: प्रथमे दशके श्री अरविन्द: भारतीय-प्रशासको न भूत्वा वडोदरामहाराजस्य साचिव्यं स्वीकृत्य तदनु 1906 तमे ईशवीयेऽब्दे आचार्यपदं त्यक्त्वा स्वतन्त्रतासङ्ग्रामे उग्रपथानुसरणमकरोत्। बडोदरावाससमये एव स स्वकीयाग्रहबलेन संस्कृतभाषामधीत्य संस्कृतभाषया गद्यं पद्यं च लीलया रचितवान्[1]।

अस्मिन्नेव नगरे निवसतस्तस्य चेतसि संस्कृतभाषाध्ययने रुचिर्जागरिताभूत्। अस्मिन्नेव नगरे तेन सा संस्कृतभाषा समर्जिता ययाऽग्रे गत्वा तेन अलीपूरकारागार- प्रवासे 99 पद्यात्मिका **'भवानी भारती'**गीति: रचिता। पारतन्त्र्यपीडिता भवानीरूपा भारती (भारतमाता) कीदृशी तस्मै प्रतीताभूदिति पश्यन्तु सुधिय:–

**नरास्थिमालां नृकपालकाञ्चीं**
**वृकोदराक्षीं क्षुधितां दरिद्राम् ।**
**पृष्ठे व्रणाटामसुरप्रतोदै:**
**सिंहीं नदन्तीमिव हन्तुकामाम् ॥**

(भवानी भारती /5)

भारतमातुर्दुरवस्थाया अस्या दूरीकरणाय एकपञ्चाशद्वर्षाणि व्ययीभूतानि।

लब्धेऽपि स्वातन्त्र्ये इदानीमपि अस्या दारिद्र्यं न सर्वथा दूरीभूतम् । तदर्थं एकपञ्चाशद्वर्षेभ्यः प्रयासाः क्रियन्ते । अग्रेऽपि च प्रयासाः काम्यन्ते । इयं दृष्टिः श्रीअरविन्देन प्रदत्ता । वडोदरावासाभ्यन्तर एव तस्मिन् पारतन्त्र्य-निगडपीडिताया भारतजनन्याः समुद्धारार्थं भावना नूनमेव जागरिता अभविष्यत्। इयं च राष्ट्रियभावना विंशशताब्दीयस्य संस्कृतसाहित्यस्य प्रमुखस्वरत्वेन स्वीकर्तुं शक्यते । प्रथमदशकत आरभ्य अद्यपर्यन्तं (अन्तिमदशकं यावत्) राष्ट्रचिन्तनं संस्कृतकविताया: नैसर्गिकी अभिव्यक्तिरस्ति। अत एव वडोदरानगरे अर्वाचीन- संस्कृतसाहित्यमवलम्ब्य चिन्तनं नितान्तमुपयुज्यते।

किञ्च बड़ौदाकालेजतः स्नातकपरीक्षामुत्तीर्णः श्री मूलशटर माणिकलाल याज्ञिकः (31.1.1886–13.11.1965) वडोदरामहाराज श्री सैयाजीराव-गायकवाडेनामन्त्रितः सन्नत्रत्यं प्राच्यविद्यासंस्थानं षोडशवर्षाणि सेवमानः अस्मिन्नेव नगरे **'छत्रपतिसाम्राज्यम्'** (1928) **'संयोगितास्वयंवरम्'** (1929) **'प्रताप- विजयम्'** (1931) चेति राष्ट्रियभावनाभरितं नाटकत्रयं प्रणिनाय ।

अत्रैव वडोदरानगरे लब्धविद्येन श्रीमता बद्रीनाथ काशीनाथ शास्त्रिणा **'रत्नावली'–'राधाविनोद'–'मालिनी'–'मिथ्यावासुदेव'** शीर्षकम् एकांकि- नाटकचतुष्टयं प्रकाशितम् । अष्टसर्गात्मकं तस्य **'वल्लभदिग्विजयं'** नाम महाकाव्यमप्रकाशितं सदपि विबुधानामादरपात्रमस्ति ।

अत्रैव वडोदरानगरे स्वामिभगवदाचार्यः राष्ट्रियभावनाभरितस्य भागत्रयात्मकस्य श्रीमहात्मगान्धिचरितमहाकाव्यस्य **भारतपरिजाताख्यं** प्रथमभागं विरचयामास यस्य **'पारिजातापहार'**– **'पारिजातसौरभा'**ख्यौ अपरौ द्वौ भागौ सोऽहमदाबादनगरे अग्रिमेषु चतुर्दशसु वर्षेषु पूरितवान्[२]।

अद्यापि एकतो यद्यत्र प्राच्यविद्यासंस्थाने विविधान् प्राच्यविषयानधिकृत्य संशोधनं क्रियते तर्हि अपरतः राजेन्द्रनाणावटी–उमा देशपाण्डे–जयदेवजानी-प्रभृतिभिः स्वरचनाभिः संस्कृतसाहित्यस्य श्रीवृद्धिर्विधीयते।[३]

एभिरन्यैश्चैतादृशैः कारणैः वडोदरानगरे **'अर्वाचीनसंस्कृतसाहित्य'**-मवलम्ब्यास्य जनस्याभिभाषणं नूनमेव प्रासङ्गिकतामर्हति।

28-30.1.1997 तारिकासु जाधवपुरविश्वविद्यालये समायोजिते अ०भा० प्राच्यविद्यापरिषदः अष्टात्रिंशत्तमेऽधिवेशने इदम्प्रथमतया 'अर्वाचीन-संस्कृतसाहित्य' शीर्षकोऽनुभागः प्रवर्तितोऽभूत् यस्याध्यक्ष्यं प्रसिद्धसंस्कृतविदुषा किंच साहित्यकारेण डॉ० रामकरण शर्म महाभागेन कृतम्। क्व डॉ० शर्ममहाभाग-सदृशाः समर्थाः जनाः क्व चाहम् अल्पबुद्धिरल्पशक्तिश्च वराको जनः? विस्तृतं गभीरं च अर्वाचीनसंस्कृतसाहित्यसागरं किल उडुपेन तितीर्षुर्यदि विदुषां हास्यभूमिं गच्छामि तर्हि का अस्वाभाविकता! तथापि विदुषां समवाये तेषां विद्यावर्चसा रक्षितः सन् सप्तनवत्युत्तरैकोनविंशतितमाद् अब्दादारभ्य अद्यपर्यन्तं प्रणीतं, प्रकाशितं प्रकाशनाधीनं वा संस्कृतसाहित्यमवलम्ब्य काश्चन सूचना भवद्भ्यो दातुं यते। अस्मिन् भाषणे विस्तृतसमीक्षणस्यपावकाशो नास्ति। सूचनादानमपि पर्याप्तमवकाशमपेक्षते।

**'अभिराज'डा0 राजेन्द्रमिश्रो लिखति–**

"........अर्वाचीनसंस्कृतकवितायाः स्वर्णकालोऽधुना प्रवर्तते। इतः प्राक् पुनर्जागरणकालः (1784-1885) स्थापनाकालश्च (1886-1947) व्यतीतौ। स्थापनाकाल एव गीतादिप्रणयनं प्रारब्धं, प्राक्तनकाव्यशास्त्रानुमतसिद्धान्त- परिपाटीमतिक्रम्याभिनवशिल्पेतिवृत्तानि महाकाव्यानि प्राणीयन्त, हिन्द्यादिभारतीय- भाषासमगतीन्येकांकीनि पुष्कलमात्रया विरचितानि। एवं हि स्थापनाकालोऽयमासीत् विविधनूतनसाहित्यसंरचनानां प्रस्थानकालः। एतत्कालोत्पन्नाः, प्रतिभापरिष्ठाः संस्कृतकवयो निश्चप्रचं सर्वतन्त्रस्वतन्त्रप्रवृत्तिमात्मनीनां निरंकुशतां च प्रदर्श्याभिनवसाहित्यनिर्मितेः सरणिं प्रशस्तामकुर्वन्। अन्यथा महाकाव्यनाटकादिषु देवनृपकोटिकनायकसमलंकृतेषु सत्सु क्वासीदवकाशोऽधुनातननृपेतरनायक-चरिताश्रितानां महाकाव्यादीनाम्? अनेनैतदुक्तं भवति यत्संस्कृतकाव्यधारा मन्दाकिनीव सन्ततप्रवाहमयी गतिशीला च। प्राक्तनकाव्यशास्त्रीयनियमानुबन्धपोषणपराप्यसौ युगप्रवृत्तिं युगबोधं वा नोपेक्षते। अन्या भारतीयभाषा इव सापि साम्प्रतिकसमाजप्रवृत्तीः प्रतिपाद्यीकरोति, तद्दर्पणभूता च सन्तिष्ठते। एवं हि अर्वाचीनसंस्कृतकविता कविजनानामुदारदृष्टेः प्रक्रान्तप्रतिबद्धताया गतिशीलरचनाधर्मितायाश्च मानदण्डं समुपस्थापयति।"[4]

## (१) महाकाव्यानि

### भरतचरितम् (महाकाव्यम्)

श्रीमद्भागवतमहापुराणस्य पञ्चमे स्कन्धे वर्णितं जडभरतस्य चरितमाधारीकृत्य युवकविना श्रीरामकुमारशर्मणा अष्टसर्गात्मकं **'भरतचरितं'**नाम महाकाव्यं प्रणीतम्।[5]

### बसवभास्करोदयः (महाकाव्यम्)

वीरशैवमतप्रवर्तकं श्रीबसवेश्वरं नायकीकृत्य शिवकविना डॉ० परङ्गीमल्लिकार्जुनमहाभागेन षोडशसर्गात्मकं[6] वसंतभास्करोदयनाम महाकाव्यं प्रणीतम्। नायकः खलु विवेकवान् उदारदृष्टिः समाजोद्धारपरायणः। इयं तस्य दृष्टि :–

**श्रीशटरो मम पिताऽतुलशक्तियुक्तः**
**माता च लोकजननी हिमवत्तनूजा।**
**मित्राणि बोधविभवाः शिवभक्तिपूताः**
**सर्वं विशालभुवनं भवनं मदीयम्॥[7]**

(बसवभास्करोदयः 4/46)

वसन्ततिलका-स्रग्विणी-शार्दूलविक्रीडित-उपजाति-इन्द्रवज्रा-विबुधप्रिया-अनुष्टुप्-भुजंगप्रयात-द्रुतविलम्बित-चामर-उपेन्द्रवज्रा-मन्दाक्रान्तावृत्तै रचितेषु पद्येषु नायकमुखात्कवेर्भावाः सरलसरसरीत्या आविर्भवन्ति। इयं तस्य धर्मपालनदृष्टिर्विलोक्या–

**स्वधर्मे च निष्ठा भवेद्यस्य वन्द्या**
**परेषां मते स्यात्सहिष्णुः सदैव[8]।**

महाकाव्यस्यास्य द्वितीये सर्गे मातृभूमेर्वर्णनं कुर्वन् राष्ट्रभक्तिपरिप्लुतः कविस्तस्या वैशिष्ट्यमित्थमुद्घाटयति–

वर्गतो वेषतो भाषयाहारतो

राष्ट्र इत्थं भवेद् भूदपूर्णो यदा।

मूलतो भारतीया वयं सत्प्रजा

एकता भिन्नतायामियं भारते॥

× × ×

वित्तहीना नरा यत्र सत्यान्विता

वित्तपूर्णा जनास्त्यागशीलान्विताः।

हिंसनं यत्र सर्वैर्जनैः खण्डितं

शान्त्यहिंसामयं सन्ततं भारतम्[९] ॥

'अभिराज'डॉ० राजेन्द्रमिश्रेण महाकाव्यस्यास्य समीक्षा **'काव्यप्रशंसा'** शीर्षकेण कृता। तच्छब्देषु–

नेता श्रीबसवेश्वरोऽत्र मतिमान्यो वीरशैवव्रती

गंगाम्बानुगतोऽथ चन्नबसवोपाध्यायतागर्वितः ।

धर्माख्यः पुरुषार्थ एव रचनालक्ष्यं रसोऽगी पुन–

श्शान्तस्तद् विरचय्य कीर्तिमतुलां धत्ते परड्डीकविः[१०]॥

## वामनचरितम्

'प्रणव'कविना डॉ० इच्छराम द्विवेदेन श्रीमद्भागवतस्याष्टमे स्कन्धे वर्णितं श्रीवामनावतारचरितमाधृत्य **'श्रीवामनचरितं'**नाम महाकाव्यं प्रणीतं यत्र विविधरसानाम्, वर्णनानाम्, अलंकाराणां च यथोचितं संगुम्फनं सहृदयानां चेतांसि रञ्जयति।[11]

## चचवंशमहाकाव्यम्

पं० रामचन्द्र (हरिशरण) अम्बिकादत्त शाण्डिल्यप्रणीते **'चचवंश-महाकाव्ये'**[१२] सिन्धुदेशीयराज्ञः चचस्य तत्पुत्रस्य दाहरसेनस्य दाहरसिंहस्य च चरितं प्रासादिकशैल्यां वर्णितम्। दिङ्मात्रमुदाह्रियते–

**सिंहो यथा हन्ति गजान् प्रमत्तान्**
**तथैव निघ्नन्नरवान दहारः ।**
**पदं तदीयं निपपात यत्र**
**संहार आसीत् द्विषतां नु तत्र[१३] ॥**

**वैनायकम्**

श्री गजानन बालकृष्ण पळसुलेमहाभागेन पंचविंशतिसर्गात्मके **'वैनायकम्'** इत्येतस्मिन् महाकाव्ये स्वातन्त्र्यवीरविनायक दामोदरसावरकरस्य जीवनगाथा निबद्धा। इदं महाकाव्यं शारदा-गौरव-ग्रन्थमालातः, १६.२.१९९८ तमे दिनांके पं० वसन्त अनन्त गाडगीळेन प्रकाशितम्।[१४] प्रसादगुणीपेतेऽस्मिन् महाकाव्ये सावरकरस्य विचाराः कविना पद्यरूपं प्रापिताः। दिङ्मात्रमुदाह्रियते-

**एकचित्तयुत, एकसाध्यवान्,**
**एकजीवयुत, एकसाधनः।**
**एकसंघ उत चैकहृत्तथा**
**एवमेकरस-हिन्दुरिष्यते॥[१५]**

**गीतानन्तरसम्-**

**'पञ्चमी साहित्यविद्या'-'श्रीभागवतसहस्रनामस्तोत्रम्' 'श्रीसप्त-शतीसहस्रम्'** चेति कृतीनां कर्ता डॉ० बटोही झा गतवर्षे **'गीतानन्तरसं'** नाम प्रबन्धरसोपेतं गीतिकाव्यं विरचय्य संस्कृतगीतिकाव्यपरम्परां पुपोष। श्रीप्रभुदत्त ब्रह्मचारिविरचितां हिन्दीभाषागतां **श्रीचैतन्यचरितावलि**माधृत्य श्रीचैतन्य- महाप्रभोश्चरित्रमस्मिन् काव्ये गीतात्मकतया झामहाभागेन प्रस्तुतम्। काव्यस्य पूर्तिः अनन्तचतुर्दश्यां-15.9.1997 तमे दिनांके जाता। 781 पद्यात्मकमिदं काव्यं भक्तिरसं पुष्णाति। उक्तं हि कविना विनम्रतया-

**'गीतानन्तरसं' प्रभुस्तुतिपरं सौहार्दमात्रात्मकं**
**काव्यालंकृतिरीतिवस्तुविगुणं शब्दार्थसंयोजनम्।**
**औचित्येन हि भावगुम्फनफलं दत्त्वा प्रभोः सञ्चितं**
**श्रीगौराग्गुणाकरं सुमनसां भावद्रुमासेचनम्[16]॥**

# (२) नाटकानि

## सीताभ्युदयम् (नाटकम्)

डा० रामजी उपाध्यायस्य षडंकात्मकं **'सीताभ्युदयम्'**[१७] नाम नाटकं सीताया अभ्युदयं वर्णयति। सीता रसातलं (भारतात् क्षीरसागरं यावद् द्वीपेषु प्रायद्वीपेषु च) प्राप्य तत्र रामादर्शान् प्रचारयिष्यति वरुणस्य, रामस्य ब्रह्मणश्च सहमतिरत्रास्ति।

**वरुणः** सीताया भाविनियोगो रसातले भारतात् क्षीरसागरं यावद् द्वीपेषु प्रायद्वीपेषु च वरीवर्ति। तया सह वाल्मीकिना यद् रामायणं प्रणीतं तस्यादर्शेन तेषु तेषु द्वीपेषु रामराज्यादर्शा नागादिभिर्लोकशासकैश्चात्मसात्करणीयाः।

**रामः** तत्र सीताया अस्ति कश्चिन्नियोगः?

**वरुणः** आम्। पृथिवीदेव्या योजनानुसारेण वाल्मीकेः कुलपतित्वेऽत्र यद् विश्वविद्यापीठं विलसति, तत् सर्वशो रसातले स्थानान्तरितं भवेत्। तस्मिन् विद्यापीठे विश्वस्य सर्वेषां द्वीपानां छात्रा अन्तेवासिनः शिक्षिष्यन्ते। स्वयं सीता महिलाविद्यापीठस्य संचालनं विधास्यति।

**ब्रह्मा** (निर्वर्णयति)
किन्तु प्रसगेऽस्मिन् रामस्यानुमोदनं नितरामपेक्षितम्।

**रामः** ...सीतायास्तत्र पाताले प्रयाणं वरुणप्रस्तावानुवर्तनेनानुमोदयामि।[१८]

रामकथायां नवोद्भावनां कुर्वन् नाटककारोऽवश्यमेव समीक्षकाणां ध्यानमावर्जयिष्यतीति मन्ये।

## बालनाट्यावलिः

श्री रामचन्द्र (हरिशरण) अम्बिकादत्त शाण्डिल्यस्य **'बालनाट्यावलिः'**[१९] चतुर्दशलघुनाटकानां संग्रहोऽस्ति यत्र 'उर्वश्याः परित्राणम्', 'पतिव्रता सावित्री', 'शकुन्तला', 'अभिमन्योर्वधः', 'कालिदासः', 'सुषमास्वयंवरः', 'देशद्रोही', 'देशभक्तः', 'दाहरवीरता', 'बलिदानम्', 'वीरः शिवाजी', 'दीवानगिद्दूमलस्य

चातुर्यम्', 'बालगान्धिः' तथा 'युवा गान्धिः' इत्येतेषु शीर्षकेषु बालैरपि प्रयोक्तव्यानि उताहो बाल (लघु)-रूपाणि नाटकानि संकलितानि येषु षट् सिन्धुप्रदेशस्यैतिहासमाधारीकृत्य प्रणीतानि सन्ति। पञ्चदशमिनटात्मके समये साधारणरंगभूमावेतेषां नाटकानां प्रयोगः कर्तुं शक्यते।

## मृत्युरयं कस्तूरीमृगोऽस्ति

डा० हर्षदेवमाधवस्य नव-नूतनाः कृतयः प्रतिवर्षं प्रकाश्यन्ते। तस्य प्रत्यग्रा रचना 'मृत्युरयं कस्तूरीमृगोऽस्ती'[२०]त्यस्ति यत्र प्रथमे भागे सप्त नाटकानि संकलितानि सिन्त। कब्रस्थाने, चिताग्निः साक्षिरूपो वर्तते, कामला, जिगमिषा, परीक्षा, मृत्युरयं कस्तूरीमृगोऽस्ति, नवं जन्म नवानि कर्माणि नवं फलम्-एतेषु नाटकेषु माधवेन पाश्चात्त्यनाट्यरंगमंचे प्रचलिता विसंगतनाट्यशैली, शर्मण्यदेशीय रंगकर्मिणो नाट्यकर्तुः ब्रेख्तस्य पद्धतिः किञ्च स्वनवीनसंविधानकेन युता शैली स्वीकृता। शिक्षाजगति, राजनीतिक्षेत्रे, सामाजिकजीवने च व्यंग्यं कुर्वन्ति नाटकानि नूनमेव प्रेक्षणीयानि प्रेरणाप्रदानि च सन्ति। संवादेषु विविधभाषाशब्दप्रयोगेणापि वैचित्र्यमुत्पाद्यते।

## स्नेहसौवीरम्-

डॉ० भास्कराचार्यत्रिपाठिप्रणीतं **'स्नेहसौवीरं'**[२१]नाम नाटकं सहिन्द्यनुवादं प्रकाशितं यत्र शबर्याश्चरित्रं नायककोटिं लंभमानः नाटककारः नाट्यपरम्परा-पालनेन साकमनेकान् नूतनप्रयोगान् कृतवान्। **'अपूर्वं संविधानकम्'** इत्येतच्छीर्षकेण भवतां पुरतो भाषमाणेन जनेनास्य नाटकस्य वैशिष्ट्यं प्रस्तावनायां किञ्चित् समुद्घाटितमस्ति। विस्तरशस्तत्रैव द्रष्टव्यम्।

# ( ३ ) काव्यसंकलनानि

## निष्क्रान्ताः सर्वे[22]-

डॉ० हर्षदेव माधवः साम्प्रतिकेषु संस्कृतरचनाकारेषु काञ्चिद् विशिष्टां विच्छित्तिं धत्ते। दशाधिका अस्य ग्रन्था नवनवान् विचारान् नवनूतनशैल्या प्रस्तुवन्ति। विगतविंशतिप्रायवर्षेभ्योऽयं संस्कृतस्य विविधासु पत्रिकासु प्रकाशितो भवति। **'निष्क्रान्ताः सर्वे'** शीर्षके त्रिशतप्रायपृष्ठात्मके ग्रन्थे अस्य महानुभावस्य

तान्का-हाइकु-गीत-गजल-मुक्तवृत्त-महाकाव्यखण्डाद्यास्ता विविधा रचनाः संकलितास्सन्ति या इतः पूर्वं यत्र तत्र पत्रिकासु प्रकाशिता अभूवन्। अस्य कवेः काव्ये प्रसगगर्भकता अपूर्वा विद्यते। तया परिचितः सन् पाठकः सम्पूर्णमपि विश्वम् एकनीडवत्पश्यति। साहित्याकादम्यायोजितेषु कविसमवायेष्वस्य काव्यपाठो बहुधाजायत येन श्रोतारश्चकिता अभूवन्। संस्कृतभाषा कियत्या स्वाभाविकतया जापानदेशीयानि वृत्तानि स्वीकर्तुं किञ्च नवनवान् विचारान् भावांश्च वोढुमभिव्यक्तुं च क्षमेति हर्षदेवमाधवस्य रचनाभिः सुतरां स्फुटीभवति। बम्बविस्फोटो वा स्यात्, भूकम्पो वा स्यात्, 'इन्सेट-बी'उपग्रहो वा स्यात् 'टायटेनिक' जलपोतस्य जलसमाधिर्वा स्यात्-सर्वेऽपि प्रतीकाः काव्यान्तर्गताः सन्तः संस्कृतकाव्यपाठकस्य ज्ञानवैभवं वर्धयन्त्येव। अस्य महानुभावस्य रचना अवलम्ब्य डॉ० राजेन्द्र मिश्र-डॉ० हरिदत्तशर्म-डॉ० राधावल्लभ-डॉ० इच्छारामद्विवेद-डॉ० सत्यव्रत शास्त्रि-डॉ० विन्ध्येश्वरीप्रसादमिश्र-प्रभृतिभिः कविसमीक्षकैः समीक्षा कृता। साप्यस्मिन् ग्रन्थे प्रदत्ता।

दिङ्मात्रमुदाह्रियते। **'हिन्दीनगरम्'**-इति शीर्षक रचनायां कवेः चिन्तनं दृश्यताम्-

**'समाधौ सुप्तामहिंसां न द्रष्टुमिच्छामि।**

**अकालमृत्युप्राप्तां शक्त्या जिजीविषां स्मर्तुं न कामये ।**

**'इण्डियागेट'-इत्याख्ये प्रवेशद्वारे**

**सत्तामदालसं भारतं न रोचते मे।**

**नगरपरिवहनस्य बसयाने पठाम्यहम् यत्-**

**'आसनस्य निम्नभागं पश्यतु।**

**तत्र बाम्बसदृशः पदार्थो भवेत्।**

**पुलिसाधिकारिणे निवेद्य पारितोषिकमर्जयतु!' इति तदाहं मम स्खलितपादं स्वातन्त्र्यं धारयितुं यष्टिमन्विषामि। (कोऽपि महात्मा प्रयच्छेत् चेत्)**[23]

'निष्क्रान्ताःसर्वे' इति वाक्यं नाटकेषु अन्ते प्रयुज्यते। लोकवीक्षणं कृत्वा विकलितचित्तेन आशा-निराशादोलारूढेन कविना ग्रन्थान्ते भरतवाक्यरूपेणेदं काम्यते–

**तथापीदमस्तु**

**दूरदर्शने भारतैक्यं विलसतु विलसतु...!**

**मन्त्रिणां मुखेषु ह्यहिंसाकीर्तनं भवतु भवतु...!**

**बुभुक्षिता जनाः श्रद्धा-मदिरा-क्षीणाः जीवन्तु जीवन्तु...!**

**शालावृकाः पृष्ठे ब्रुवन्तु... ब्रुवन्तु...**

**परम्परामये पङ्के. पण्डिता निमज्जन्तु।**

**मृत्योरपि कुत्सिततरं जीवितं दृष्ट्वापि**

**'भारतं भाति'...**

**'मेरा भारत महान' इत्येतान् स्वप्नान् पश्यन्तु... पश्यन्तु श्वसन्तु।**

**वीर्यहीनाः कवयः 'सुष्ठु सुष्ठु' गानं कुर्वन्तु कुर्वन्तु।**[२४]

**'स्वस्थसंस्कृतजीवनम्'**-इत्यस्य ग्रन्थस्य दशमे ऽध्याये ग्रन्थकर्तुः डॉ० कृष्णनारायण पाण्डेयस्य द्वादश कविता अपि संकलिताः सन्ति यत्र विश्वमानवताभावस्य पुष्टिः क्रियते। **'अहं मनुष्यः पृथ्वीपुत्रः' 'पृथ्वी एककुलं विश्वमेव राष्ट्रम्'** इत्याद्याः रचना बालानामपि सुग्राह्याः सन्ति। यथा–

**एक प्रवृत्तिः एक संस्कृतः**

**मनु पुत्राणाम् एक पूर्वजः**

**बाह्य दर्शने भवति विनोदः**

**भोज्यं पेयं प्रायः सदृशम्**

**पृथ्वी एक कुलं विश्वमेकराष्ट्रम् ।**[25]

रमणीयं विद्यते यदितः पूर्वं डॉ० पाण्डेयेन **'मानवताविजयम्'** नाम काव्यमपि प्रणीतम्।

**त्रिपथगा**

श्रीरामशंकर अवस्थिनः काव्यसंकलनं **'त्रिपथगा'** नाम्ना प्रकाशितम्।[26]

## कवितासंकलनानि

डॉ० अमरनाथपाण्डेयमहाभागस्य **'मग्ल्या'** सप्तविंशति रचनानां संकलनम्। एतासु काश्चन गीतयः, काश्चन वर्णवृत्तनिबद्धाः। क्वचित् प्राचीना पद्धतिः क्वचिच्चार्वाचीना। **'मदीया कविता'**, **'कवितार्चनम्'**, **'कविता'**–इत्येतासु रचनासु कविः स्वकवितायाः कवितामुखेन परिचयं प्रस्तौति। **'दीपोत्सव'**- **'वसन्तोत्सव'**योः कविरेतयोरुत्सवयोः परिष्कारमभिलषति। **'कामद'** इत्यस्यां रचनायां कविना चित्रकूटस्य गरिमा प्रकटीकृतः। **'त्वामन्विष्यामी'** त्यस्यां मुक्तच्छन्दोनिबद्धायां रचनायां कविः देशस्य विलुप्तं सौमनस्यं पुनरन्विषति। **'भारतदेशः'**इत्यत्र **'पद्धटिया'**-च्छन्दसि भारतस्य गरिमा नूयते। दिङ्मात्रमुदाह्रियते–

**जय देशमुकुट देवताधाम । जय भरतदेश संस्कृतिललाम॥**
**आर्यप्रभावविश्रुतविलास । विज्ञानविभासौरभनिवास॥**
**वेदार्थसदापावितविधान । अष्टादशविद्यानवनिधान ॥**
**उपनिषत्तत्त्वविशदप्रभाव । गीतोपदेशकृतनित्यभाव ॥**
**जय देशमुकुट देवताधाम । जय भरतदेश संस्कृतिललाम॥**[२७]

डॉ० राजदेवमिश्रस्य **काव्यकौतुकम्**[२८] 45 गीतानां कवितानां च संग्रहोऽस्ति यत्र राष्ट्रियभावना, संस्कृतिचिन्तनम्, प्रकृतिप्रेम–इत्यादयो भावा विविधेषु रूपेषु अभिव्यक्ताः। अस्मिन्नेव संग्रहे कवेः प्रसिद्धं गीतं **'सखि मानसं विरहातुरं धैर्यं धरिष्यति वा नवा'**–वर्तते।

डा० मिश्रस्य **काव्यसौरभम्**–40 गीतानां संग्रहोऽस्ति।[२९] यत्र राष्ट्रचिन्तनं प्रमुखो भावः। तद्यथा–

**राष्ट्रधर्मो ऽधुना वर्धतां भारते !**
**सच्चरित्रप्रभा भारते भासताम् !**
**एकता राष्ट्रिया सर्वथा रक्ष्यताम्**
**राष्ट्रसेवाव्रतं जीवने धार्यताम् !**
**स्वं मनो लोकसेवाव्रते रज्यताम् !**

इत्यादि रचनासु कवे राष्ट्रभक्तिभावः प्रामुख्येन अभिव्यक्तः। स्रग्विणीवृत्तं प्राधान्येन प्रयुक्तम्–

**जीवने राष्ट्रिये विघ्नरूपाः खला**
**नित्यशः सर्वथा स्वार्थसिद्धौ रताः ।**
**राष्ट्रभक्त्या विहीनाश्च हेया जना**
**राष्ट्रसेवान्वितं तन्मनो जायताम् ॥**
**राष्ट्रसेवाव्रतं जीवने धार्यताम् ॥**
**राष्ट्ररागं विना राष्ट्रभक्तिः कुतो,**
**राष्ट्रसेवां विना राष्ट्रभावश्च किम्।**
**राष्ट्ररागश्च सेवाव्रते राजते**
**मूलरूपेण मत्वा व्रतं चर्यताम्॥**[३०]

(काव्यसौरभम्, पृ० 29)

### विवेकसाहस्त्री[३१]

डॉ० उमारमण झा महाभागस्य 'विवेकसाहस्त्री' प्रकाशनाधीना वर्तते। अत्र 1000 पद्यानि किञ्च दश शतकानि सन्ति। तद्यथा–

(1) शक्तिशतकम्, (2) विष्णुशतकम्, (3) शिवशतकम्, (4) राष्ट्र शतकम्, (5) सप्तपुरीशतकम्, (6) पुरुषार्थशतकम्, (7) व्यवहारशतकम्, (8) अभिनन्दनशतकम्, (9) श्रद्धाञ्जलिशतकम्, (10) चिन्तनशतकम्।

### सुभाषचन्द्रकाव्यवल्लरी

नेतृवर्यसुभाषचन्द्रबोसस्य जन्मशताब्द्यवसरे दिल्लीसंस्कृताकादम्या प्रकाशिते **'सुभाषचन्द्रकाव्यवल्लरी'**तिनाम्नि संकलने विंशतिकवीनां रचनास्संकलिताः सन्ति यत्र इन्द्रवज्रार्या-पंचचामरशार्दूलविक्रीडितोपजातिभुजंगप्रयात-स्रग्विणी

वसन्ततिलकादिवृत्तेषु गीतिकासु च नेतृवर्यसुभाषचन्द्रबोसमहाभागस्य सश्रद्धं स्मरणं विधीयते। दिङ्मात्रं यथा–

**'दीयतां मे स्वरक्तं भवद्भिस्समै-**
**रात्मतन्त्र्यं भवद्भ्यो मया दास्यते।'**
**आजुहावेति यो भारतीयान् जनान्**
**तं सुभाषं स्मरामो वयं सादरम् ॥**[३२]

(रमाकान्तशुक्लस्य)

यथा वा–

**'नीतिर्विनम्रा किल गान्धिनस्तु**
**बोसाय नारोचत वीरपुंसे ।**
**स्वातन्त्र्यलाभो वचनैर्न लभ्यः**
**सर्वैस्तदर्थं रुधिरं प्रदेयम् ॥**[३३]

(दुर्गादत्तशास्त्रिणः)

**गगनवाणी**[34]

**'शिवशुकीय'**-**'सन्ध्या'**-**'पाथेयशतक'**-**'वीणा'**-**'दीपिका'**-**'सर्वमगला'**-कर्तुः डॉ० रामकरणशर्मणोऽभिनवतमः संस्कृतकवितासंग्रहः 'गगनवाणी'नाम्ना प्रकाशितोऽस्ति। द्विचत्वारिंशत्संख्याकाः (42) कविताः त्रिषु शीर्षकेषु विभक्ताः सन्ति। कवेर्नूतना नूतना भावा अहमहमिकया हृदयगगनवाणीरूपेण आविर्भवन्ति। प्रथमो विभागो ऽस्ति **'अमरलतिका'**-नामा यत्र षट्त्रिंशतिः कवितानाम् संकलितास्ति। **'अमरलतिका'** संस्कृतभाषास्ति। सा आत्मपरिचयमित्थं ददाति–

**मम न किमपि क्षेत्रं स्वीयं न वा परकीयकं**
**मम तु वसुधा काम्या कृत्स्ना महोदधिमालिनी ।**
**रविरिव दिवि प्रोद्यन् प्रद्योतयामि महीं समां**
**वपुषि भुजगा एते सर्पन्ति चैव सुमानि मे**[३५] **॥**

**'यात्री'**ति कवितायां कविर्दार्शनिकतां भजमानो दृश्यते–

**न जाने कदा कुत्र गन्तास्मि यात्री**
**न जाने स्वकीये गृहे वाऽन्यदीये।**

**न जाने स यात्राक्रमोऽनन्तमार्गः**
**कदा केन मह्यं प्रदत्तः किमर्थम्**[३६]॥

साम्प्रतिके प्रदूषणबहुले जगति आत्मशुद्धिं जनानां कामयते कविरत्र काव्ये।[37]

**'स्वातन्त्र्यस्वर्णजयन्तीवैजयन्ती'**तिशीर्षके भागे प्रथमा एकोत्तरशतार्यावृत्त-मयी रचनास्ति **बापूस्मृति**रित्यपरनामधेया **'चम्पारण्यहरिपतिः'** यत्र महात्म-गान्धिनः सत्यप्रियता, अहिंसा, सूत्रचक्रपरता, स्वावलम्बनमित्याद्या गुणाः समुल्लसन्ति। मध्येकाव्यं गान्धिनश्चिन्ता उदेति–

**अपि 'वोटार्थं' वंश्या मम विक्रेष्यन्ति राष्ट्रकल्याणम् ।**
**विक्रेष्यन्ति हुतात्मावशेषभस्मानि वीथीषु**[३८] **॥**

अन्ते च गान्धिः चिरन्तनभारतीयसंस्कृतेश्चिरन्तनमभिलाषं व्यनक्ति–

**विश्वेषां बन्धूनां**
**प्रसादमेवार्थये प्रसन्नोऽहम् ।**
**लोकान्तरं यियासोः**
**पाथेयः स्यात्प्रसादो मे ॥१००॥**
**सर्वे भवन्तु सुखिनः**
**सर्वे स्वस्थाः भवन्तु सम्पन्नाः ।**
**सर्वे पुष्यन्तु मिथः**
**सर्वान् सौहार्दविमलहृदः॥१०१॥**[39]

द्वितीया कवितास्ति–**'कुँअरसिंह उवाच'** यत्र स्वप्नागतो हुतात्मा कुँअरसिंहो भारतीयान् देशोद्धारार्थं प्रबोधयति।[40]

**'लोकगीतानुवादकुसुमाञ्जलि'**-संज्ञके तृतीये शीर्षके विद्यापति-कवेर्मैथिलीभाषानिबद्धयोः किञ्च भोजपुरीभाषानिबद्धयोर्लोकगीतयोः संस्कृतरूपान्तरं कृतं कविना। अस्मिन् कर्मणि कवेरर्धाग्नी श्रीमती अन्नपूर्णा तं न्ययूयुजत्। सैव गीतचतुष्टयं तस्मै रूपान्तरकरणाय प्रास्तावीत्।

दिङ्मात्रमुदाह्रियते–

**बड़ सुख सार पाओल तुअ तीरे ।**
**छोड़इत निकट नयन बह नीरे ॥**

विद्यापतेः मैथिलीकविताया गंगास्तुतेरंशस्यास्य संस्कृतरूपान्तरमिदम्–

**सुखानां भूयसां सारो मया निरवेशि तव तीरे।**
**त्वदटादेष निर्गच्छन्निमग्नः स्वे नयननीरे ॥**[41]

यथा वा–

**कत दिन राम भरब हम गगरी ।**
**धीरे चलूँ त बलक घर रोवे**
**झटकी चलूँ त भींजे मोरा चुनरी । कत दिन............**

भोजपुरीभाषानिबद्धस्यास्य लोकगीतांशस्य संस्कृतरूपान्तरमिदम्–

**भरिष्याम्याहरिष्यामि च**
**सलिलकुम्भं कियत्कालम् । भरिष्या0**
**शनैर्यदि यामि, चिररात्राय**
**विलपिष्यति गृहे बालः ।**
**द्रुतं यदि यामि, वसनं मे**
**भवेदार्द्रं सलिलवेगैः । भरिष्या0**[42]

## (४) स्त्रोत्रकाव्यानि

**'भक्तिरसामृतं'** 'कविरत्न'श्रीकृष्णसेमवालेन रचितानां स्तोत्राणां संकलनमस्ति। 'ईशप्रार्थना', 'सरस्वतीवन्दना', 'हनुमत्सुप्रभातम्', 'वर्णात्मक-भगवतीसुप्रभातम्', 'कामना', 'सर्वमगलाशतकम्', 'कात्यायनीस्तवः', 'ज्वाल्पादेवी भुवि भगवती भासतां मे सुमाता'–इत्येतानि पूर्वं स्फुटतया विविधपत्रिकासु प्रकाशितानि स्तोत्राणि डॉ० मोहनचन्द–'अभिराज' डॉ० राजन्द्रमिश्रकृतसमीक्षाभ्यां सहितान्यत्र प्रकाश्यन्ते यत्र कवेः हार्दिकभावानां सहजानुभूतिर्भवति।

दिङ्मात्रमुदाह्रियते–

**मुखरता मयि यद्यपि विद्यते**
**सकलतापहरे सदयाम्बिके ।**

**अयमहन्तु तथापि भवाम्युमे**
**सपदि मूकसमस्तव सम्मुखे ॥**

**भावकादम्बकम्**

शंकरजी-प्रणीते '**भावकादम्बके**' सप्तदश कविताः संकलिताः सन्ति। स्रग्धरा-शिखरिणी-मन्दाक्रान्ता-शार्दूलविक्रीडित-दण्डकार्या-प्रभृतिविविधवृत्तबद्धासु रचनासु **गणेशस्तुति-शिवस्तुति-प्रकृतिवर्णन-अन्योक्ति-समस्यापूर्ति-** प्रभृतिपरकाणि पद्यानि कवेः प्रतिभां सूचयन्ति। काव्यान्ते '**स्वस्तिवाक्**' कवितास्ते या सर्वेषां गग्लमभिलषति। रिङ्मात्रमुदाह्रियते–

**विश्वेऽस्मिन् मानवाः स्युर्विमलमतियुताः सर्वदा सत्यनिष्ठाः**
**आधेर्व्याधेश्च मुक्ताः सकलगुणयुताः सर्वसौभाग्यभाजः।**
**शान्तिः सर्वत्र भूयान्निखिलभुवि जनाः पूर्णकामा भवन्तु**
**दुष्टानां दोषबुद्धिर्विलयतु सततं सन्मतिः स्याच्च तेषाम्॥**[४३]

**अभिनवकविताञ्जलिः**

प्रो० केशवरामशर्मणा '**अभिनवकविताञ्जलि**'रित्येतस्मिन् कवितासंग्रहे पञ्चाशत्कवितासु भक्ति-नीति-सूक्ति-परकाणि पद्यानि संकलितानि। क्वचित् व्यङ्ग्यच्छटापि द्रष्टुं शक्यते। क्वचिदुद्बोधने देशदशायाः समुद्धारार्थं प्रेरणां ददाति। तद्यथा–

**देवकल्पैर्भारतीयैर्दानवत्वं किं धृतम् ?**
**विश्वशस्तं संस्कृतेः किं गौरवं कलुषीकृतम् ?**
**कर्दमे पततां हि नः को मार्जयिष्यति पंकिलां कम् ?**

**× × × ×**

**देशभक्तैस्त्यागिभिः स्वातन्त्र्यदीपो ज्वालितः**
**धूर्तनेतृभिरञ्जसासौ द्रोहिभिर्निर्वापितः**
**क्वोदयेद् बलिदानभानुर्जीवयेद्यो राष्ट्रकञ्जम्**[४४] **?**

## राष्ट्रार्चनम्

आचार्यमूंगारामत्रिपाठिनः 'राष्ट्रार्चनं' ४७ कवितानां संग्रहोऽस्ति यत्र दश-पुष्पेषु–सरस्वतीवन्दना, गणपतिप्रार्थना, विविधदेवतास्तोत्राणि, महावीर-गान्धि-सन्देशाः, कालिदासमहोत्सववर्णनम्, भारत-वन्दना, गीतासारः, आचरणनीतयः, गोरक्षणनीतिः, सेवामाहात्म्यं, गुरु-कवि-सतां वन्दना, प्रकृतिवर्णनम् इत्येतदादिकान् विषयानाधारीकृत्य कविना पद्यरचना कृता। **'राष्ट्रार्चनम्'** इतिशीर्षकयुता २१ क्रमस्था कविता एव ग्रन्थस्य शीर्षकं निर्धारयति।प्रायोऽनुष्टुब्वृत्ते प्रणीताः श्लोकाः कवेर्विचारतत्त्वं सूक्तिरूपेण पाठकानां पुर उपस्थापयन्ति। दिङ्मात्रं यथा–

**राष्ट्रसेवासमायुक्ताः राष्ट्रकल्याणकारकाः ।**
**राष्ट्रनेतृगुणोपेताः राष्ट्रं कुर्वन्तु हेमभम् ॥[४५]**

## मातृगीतिकाञ्जलिः

डा० हरेकृष्णमेहेरः **'मातृगीतिकाञ्जलि'**रिति आधुनिक-संस्कृत-गीतिकाव्यसंग्रहे मात्रिकछन्दोभिः अन्त्यानुप्रासनिर्वाहपुरस्सरं पञ्चविंशतिमितानि गीतानि प्रस्तौति यानि गातुं तेन ताल-लययोरपि निर्देशो गीतान्ते कोष्ठकेषु दत्तः। एतेषु गीतेषु प्रथमं गीतं वाणी-वन्दनात्मकमस्ति, द्वितीयञ्च भारतमातुर्वन्दनपरमास्ते। द्वितीयस्य गीतस्य शीर्षकं **'मातृगीतिका'** वर्तते। अस्मिन् गीते **'मातृ'**शब्दस्य प्रयोगो विहितः कविना, यथा–

**एक-मातुः सुताः सर्वे भ्रातृ-साम्यं सत्कृतम्,**
**विजयतां नो वन्दनीयं सुन्दरं धामामृतम् ।**
**भव्य-भुवनं भारतम्[४६] ॥**

मन्ये ग्रन्थस्य नामकरणे द्वितीया गीतिकैव हेतुः। पुनश्च, गीतिका मात्राच्छन्दोभिः प्रणीता इयमपि व्यञ्जना भवति। गीतिकासु भारत-गौरवं, नारी-महिमा, त्र्यम्बक-यजनं, गायत्रीगानं कलाकार-प्ररोचना–इत्येते भावाः साक्षात्कर्तुं शक्यन्ते।

## भावपुष्पाणि

श्रीगोविन्दलाल शाहे न **'भावपुष्पाणी'ति** द्वादशकवितानां संग्रहे

सरलसंस्कृतेन वर्णवृत्तैः (न पूर्णतः पारम्परिकैः) मुक्तछन्दोभिश्च भावाभिव्यक्तिः कृता। गुजरातीभाषानुवादोऽपि ग्रन्थे संयोजितः। दिङ्मात्रमुदाह्रियते 'शरत्पूर्णिमा'तः–

**हे पूर्णचन्द्र शरदः !**
**तव सौम्यबिम्बम्**
**सौन्दर्यपूर्णललितम्,**
**किरणैः सहस्रैः**
**पीयूषवर्षमवलोक्य विचिन्तयामि ।**
**कृष्णो यदा ह्यरमत परब्रह्मरूपो**
**भूत्वा विभिन्नरूपवान् व्रजनारीवृन्दैः**
**रासम्, रमेश यमुनासिकतेषु**
**सिक्तस्ते ज्योत्स्नत्या विमलया..**
**कीदृशी तदा स्यात !**
**तव रम्यलक्ष्मीः[४७] ।**

## विंशशताब्दीसंस्कृतकाव्यामृतम्

'अभिराज' राजेन्द्रमिश्रेण **'विंशशताब्दीसंस्कृतकाव्यामृतम्'**[४८] इत्येतन्नाम बृहत्काव्यसंकलनं सम्पाद्य दिल्लीसंस्कृताकादम्यै प्रकाशनाय प्रदत्तं यस्य विस्तृता भूमिका तेन अस्मिन् वर्षे (१९९८) संस्कृतदिवसे लिखिता। संकलनमिदं १९९६ तम वर्षतः १९९८ वर्षं यावत्तेन संग्रथितम्। अस्मिन् संकलने १३० समकालीनानां वृद्धप्रौढयुवककवीनां रचनाः संक्षिप्तपरिचयपुरस्सरं संकलिताः सन्ति यासु संस्कृतकवितायाः युगधर्मिता, प्रासंगिकता, असीमक्षमता किञ्च सम्प्रेषणीयता सुतरां समुल्लसन्ति। आशासे, संकलनमिदं शीघ्रमेव प्रकाशमेष्यति।

दिङ्मात्रमुदाह्रियते–

**मुखरता मयि यद्यपि विद्यते**
**सकलतापहरे सदयाम्बिके।**

**अयमहन्तु तथापि भवाम्युमे**
**सपदि मूकसमस्तव सम्मुखे॥**[४९]

### रासनायकनायिकम्

कविपुण्डरीकसम्पूर्णदत्तमिश्रेण स्वरचितयोः रासनायकस्तव-रासनायिका-स्तवयोः संकलनं **'रासनायकनायिकम्'** इत्येतस्मिन् काव्ये कृतम्। उभयोः स्तोत्रयोः हिन्द्यांगलभाषयोः सान्त्यानुप्रासो भावानुवादोऽपि कविनाऽत्र प्रदत्तः। एतदतिरिक्तं 'राधाकृपाकटाक्ष'-स्तोत्रस्याप्यनुवादो मूलसहितः कविना ग्रन्थान्ते प्रदत्तः। भक्तिभावलसिता सरस-सरलपदावली द्रष्टव्या, श्रोतव्या, मन्तव्या, निदिध्यासितव्या च सहृदयैः-

**वनवासी-प्रसादके सखीसुखोपसादके**
**कृतान्तकोपसादके नदीतरग-मादके ।**
**सिता-पयः-फलादके स्वरालवेणुवादके**
**रमे रविच्छटाभिभूतगोपिकाभिवादके ॥**[५०]

## (५) कथा-संग्रह

### नीरवस्वनः[५१]

डा० बनमाली विश्वालस्य 'नीरवस्वनः' इत्येतन्नामके लघुकथासंग्रहे संकलिताः त्रिंशल्लघुकथाः कथानक-पात्र-संवाद-देशकालयोजना-भाषाशैल्युद्देश्येतिकथातत्त्वानां सम्यक् परिपालनं कुर्वत्यः पाठकचेतस्सु कारुण्यहास्यादीनामाविर्भावं कुर्वन्ति। **'नीरवस्वनः'** इत्यस्यां कथायां कालीनाम्न्या मूकबधिरबालिकायाः कथा वर्णिता। इयमेव प्रधानभूता कथा। अतः कथासंग्रहस्य नाम **'नीरवस्वनः'** इति कथाकारेण निर्धारितम्। सूक्तीनामपि बहुत्र प्रयोगो दृश्यते। यथा-

**'कदाचित् मनुष्यः नीरवः सन्नपि अधिकं वक्तुं शक्नोति। पक्षान्तरे कदाचित्सः समस्तशक्त्या चीत्कुर्वन्नपि स्वाभिप्रायं प्रकटयितुमसमर्थो भवति।'**

**कथामन्दाकिनी**[५२]

श्रीमता ओम्प्रकाशठाकुरेण सुकुमारमतीनां बालानां कृते '**कथामन्दाकिनी**'ति नामा कथासंग्रहो विरचितः, यत्र मनोरंजन-व्यवहारज्ञान-शिक्षा-नीति-परिहास- नैतिकमूल्य-सच्चरितानि आधारीकृत्य षष्टिः कथा संकलिताः सन्ति। शीर्षकानन्तरं चित्रमपि सर्वासु कथासु योजितं येन बालका नूनमेव ताः पठितुं सोत्का भविष्यन्तीत्याशास्यते।

**डा0 बा0श्री0 रामकृष्णरावस्य संकलनचतुष्टयम्**[५३]

डा० बा०श्री० रामकृष्णरावस्य संवित्पत्रिकायां प्रकाशितपूर्वाणां गद्यलेखानां, पद्यानां, हास्यरचनानां च 'संस्कृत-गद्य-लेखावली'-'गद्यरत्नमञ्जूषा'-'पद्य-मणि-माला'-'हास्य-मधु-बिन्दवः' इत्येतस्मिन् संकलनचतुष्टये प्रकाशनं जातम्। लेखकेन 'संस्कृतभाषायाः समुन्नतेः सरलीकरणस्य चोपायाः' संस्कृते पत्रकारिता' 'का गतिः सुरभारत्याः' इत्षादिषु लेखेषु स्वचिन्तनं चारु अभिव्यक्तम्। तेन 'कूपमण्डूकन्याय'- 'मर्कटकिशोरन्याय'-'काक तालीयन्यायादीनां प्रकाशनाय नव कथालेखा अपि लेखिताः। बालानां कृते डा०रावेण 'चोरो बालः'-'अलसः नृपतिश्चे'ति शीर्षकाः कथा अपि विरचिताः। तेन बालानां मनोविनोदार्थं तथा च संस्कृतप्रेमिषु वाचनीयतायाः संवर्धनार्थं पद्यानि १२० हास्यलघुकाः (चुटकुला) च प्रकाशिताः। संकलनचतुष्टयं बालानां कृते विशेषत उपयोगि वर्तते।

## ( ६ ) अनुवादकाव्यम्

**छन्दोमयी**[५४]

डा० प्रकाशपाण्डे-महोदयेन लब्धज्ञानपीठपुरस्कारस्य मराठी-कवेः डा० वि०वा० शिरवाडकर 'कुसुमाग्रज'स्य कविताः संस्कृते मुक्तच्छन्दोभिः अनूद्य 'छन्दोमयी'ति ग्रन्थे प्रकाशिताः। पूर्वमेताः कविता 'संस्कृतभवितव्ये' प्रकाशिताः। मराठीमूलकवितायाः संस्कृतानुवादकवितया तुलना शोधकर्तॄणां रोचको विषयः स्यात्।

**श्रीसमर्थरामदासस्वामीविरचितः श्रीमद्दासबोधः** (आत्मारामसमेतः)

अनुवादकारः श्रीराम वेलापुरे। प्रका. संस्कृतदासबोध प्रकाशन समितिः द्वारा श्री रा.ना. वेलापुरे अभंग अपा.२ आगरकरपाः, डोम्बिवली (पू)-४२१२०१ (भारतम्)। अस्मिन् ग्रन्थे मराठीग्रन्थस्य संस्कृतरूपान्तरं विधाय ग्रन्थकर्त्रा संस्कृतज्ञानामुपकारः कृतः। मूर्खलक्षणात् दिङ्मात्रमुदाह्रियते-

**कथये मूर्खलक्षणानि**

**सन्ति तानि बहुविधानि**

**शृणुत कानिचत्तानि। तत्परतया॥**

**यः पितरौ त्यजति।**

**प्रतीपं च दुराचरति।**

**स्त्रीमात्मसखीं विमृशति। स एक मूर्खः॥**[५५]

## (७) काव्यशास्त्रम्

**साहित्यमातृका**

श्रीमता अरैयर् श्रीरामशर्मणा 'साहित्यमातृकां' प्रणीता यस्यां वाग्वन्दनं, कविस्वभावः, अधुनाकविजीवनं, कविमानिनः शास्त्रं साहित्यं च, जनपदाः साहित्यं च, साहित्यसञ्जीवनं, साहित्यसंशोधनं, साहित्यरसवादः, साहित्य-राष्ट्रव्यसनम्, साहित्यं राष्ट्रसत्फलं, साहित्यं राष्ट्रलक्षणम्, अधुनातनसाहित्यं, राष्ट्रसाहित्यजीवितं, स्वातन्त्र्यं पारतन्त्र्यं च, उपदेशसिद्धिः, राष्ट्रचित्रम्, साहितीकर्तव्यम्, साहित्यं भारतभावनाशनम्, राष्ट्रधारणसामर्थ्यम्, साहित्यं राष्ट्रसम्पत्, राष्ट्रसाहित्यसूत्रम् इत्यादिषु शीर्षकेषु राष्ट्रदृद्धट्या साहित्यतत्त्वं १०८ पद्येषु निरूपितम्। यथोक्तं ग्रन्थकर्त्रा–

**साहित्यलक्षणं पूर्वैः परामृश्य निदर्शितम् ।**
**तदुक्तेष्वर्थमात्रं तु राष्ट्रदृष्ट्यात्र दर्शितम् ॥**[५६]

## (८) संस्कृत पत्र-पत्रिकाः[५७]

**संस्कृत-पत्र-पत्रिकासु** विविधा रचनाः, शोधलेखाः समीक्षाश्च प्रकाशिता भवन्ति। अर्वाचीनसंस्कृतम्, विश्वसंस्कृतम्, पूर्वा, संस्कृतपारिजातम्, लोकसंस्कृतम्, संभाषणसन्देशः, व्रजगन्धा, गुञ्जारवः मञ्जरी, गैर्वाणी, संस्कृतभवितव्यम्–इत्यादि पत्र-पत्रिकासु या विविधा सामग्री प्रकाश्यते तस्या गुणपरिमाणदृशा महन्महत्त्वं विद्यते। पुस्तकारात्पूर्वं महत्त्वपूर्णाः कृतयः पत्रिकास्वेव प्रथमं प्रकाशिता जाताः भवन्ति च। एतासु पत्रिकासु समकालीना घटना अवलम्ब्य यादृशी साहित्यिकाभिव्यक्तिर्भवति सा नूनमेव संस्कृतभाषायाः सामर्थ्यं व्यनक्ति।

**विश्वसंस्कृते** विविधविषयकैः लेखैः साकं विविधा रचना अपि प्रकाश्यन्ते। डॉ० जगदीशप्रसादसेमवालस्य **'अन्योक्तयः'** डॉ० ओमप्रकाश पाण्डेयस्य **'कियती ह्यग्नि-परीक्षा भविता'**, डॉ० शिवशरणशर्मद्विवेदिनः **'वयं स्वतन्त्राः'**, डॉ० शिवप्रसाद भारद्वाजस्य **'वर्षागीतिः'** डॉ० एच. आर. शैली महोदयस्य **'ज्ञानकर्मणोर्महत्त्वम्'** श्री द्वारकाप्रसादशर्मण **'उद्बोधनम्'** इत्याद्या रचना अत्र प्रकाशिता जाताः या भाव-रचनाशिल्पदृशा पठनीयाः सन्ति।

डा० एस० रंगनाथमहाभागेन अर्वाचीनसंस्कृतरचनानां समीक्षाकर्मणि पर्याप्तः प्रयासो विहितः। **'स्वातन्त्र्योत्तरसंस्कृतवनितासाहित्यं'** **'स्वातन्त्र्योत्तर- संस्कृतनाटकम्'** **'स्वातन्त्र्योत्तरदूतकाव्यम्'** इति आंग्लभाषामाध्यमेन त्रयो ग्रन्था अनेन महानुभावेन वर्षत्रयपूर्वं प्रकाशिताः। गत वर्षे अर्वाचीनसंस्कृत- साहित्यमवलम्ब्यांग्लभाषामयोऽपरोऽप्येको ग्रन्थः æModern Sanskrit LiteratureÆ[५८] संज्ञकः (1997) प्रकाशितः) अनेन महानुभावेन विंशतताब्दीकसंस्कृतरचनानामेका सूची अपि निर्मिता या **'अर्वाचीनसंस्कृते'** त्रैमासिके प्रकाशनार्थं स्वीकृतास्ति।

1997 तमे वर्षे अर्वाचीनसंस्कृतेऽस्य **'अर्वाचीनकविमाला'** प्रकाशिता जाता यत्र दशोत्तरशतसंख्याकानां कवीनां पद्यमयः परिचयो विद्यते।[५९]

अर्वाचीनकविमालायां येषां 110 संस्कृतकवीनां पद्यबद्धः परिचयो ग्रन्थकर्त्रा प्रदत्तस्तेषां क्रमशो नामानीमानि– सर्वश्री 1. ओगेटि परीक्षित् शर्मा, 2. रा० गणेशः, 3. रामकिशोर मिश्रः, 4. एन. रगनाथ शर्मा, 5. हरिदत्त शर्मा, 6. जग्गू वकुलभूषणः, 7. बसवराजशास्त्री, 8. वासुदेवकृष्ण चतुर्वेदी, 9. एच्० वी० नारायणशास्त्री, 10. के०एस० नागराजन्, 11. अरैयर् श्रीराम शर्मा, 12. रेवाप्रसाद द्विवेदी, 13. रसिकविहारी जोशी, 14. रमाकान्त शुक्लः, 15. हरिनारायण दीक्षितः, 16. इच्छाराम द्विवेदी, 17. नलिनी शुक्ला, 18. वनमाला भवाल्कर्, 19. पुष्पा दीक्षित, 20. हर्षदेव माधवः, 21. श्रीभाष्यं विजयसारथिः, 22. राधावल्लभ त्रिपाठी, 23. केशवचन्द्र दाशः, 24. राजेन्द्र नानावटी, 25. डा० रामकरण शर्मा, 26. सत्यव्रत शास्त्री, 27. 'अभिराज' राजेन्द्र मिश्रः, 28. वि० राघवन्, 29. विघ्नेश्वर शर्मा, 30. अर्क सोमयाजी, 31. बर्िपल्लि मल्लिनाथ शर्मा, 32. हित्तलहल्लि गोविन्द भ ः, 33. के० टि० पाण्डुरगी, 34. प्रशस्यमित्र शास्त्री, 35. कृष्णलालः, 36. ओंप्रकाश ठाकुरः, 37. पुल्लेल श्रीरामचन्द्रुडुः, 38. वि० सुन्दर शर्मा, 39. के० एस्० भास्करभ ः, 40. बालागणपतिभ ः, 41. रुद्रदेव त्रिपाठी, 42. द्विभाषी सोमनाथ शास्त्री, 43. के० एस० कृष्णमूर्ति शास्त्री, 4. जग्गू शिगरार्यः, 45. पण्डरीनाथाचार्य गलगलिः, 46. राल्लपल्लि अनन्तकृष्ण शर्मा, 47. के० कृष्णजोयिस्, 48. श्रीधर भास्कर वर्णेकरः, 49. एम० रामकृष्ण भ ः, 50. पशुपति झा, 51. पि०के० नारायण पिल्लै, 52. आत्माराम शास्त्री, 53. कनराडी वि लोपाध्यायः, 54. वाशिष्ठगणपतिमुनिः, 55. पण्डिता क्षमा राव्, 56. परमानन्द शास्त्री, 57. जि०वि० तेकेदार्, 58. परड्डिमल्लिकार्जुनः, 59. जि०बि० पलसुले, 60. श्रीकृष्णसेमवालः, 61. कालूरि हनुमन्तराव्, 62. गरिकपाटि लक्ष्मीकान्तय्यः, 63. महीधर वेंकटराम शास्त्री, 64. हरिश्चन्द्ररेणापुरकरः, 65. रहसबिहारी द्विवेदी, 66. रामचन्द्र शाण्डिल्यः, 67. के०एस० रामानुजाचार्यः, 68. कुटुम्बराम शास्त्री, 69. रामाशीष पाण्डेयः, 70. एस्० बि० रघुनाथाचार्यः, 71. वि० आञ्जनेय शर्मा,

72. मण्डिकल् रामशास्त्री, 73. मण्डिकल् वरदाचार्यः, 74. साम्ब दीक्षितः, 75. के० नञ्जुण्ड घनपाठी, 76. गलगलि रामाचार्यः, 77. विश्वनाथ सत्यनारायणः, 78. सि०जि० पुरुषोत्तमः, 79. भागीरथप्रसाद त्रिपाठी, 80. रमेशचन्द्र शुक्लः, 81. सिद्धेश्वर चट्टोपाध्यायः, 82. वीरेन्द्र कुमार भट्टाचार्यः, 83. यतीन्द्र विमल चौधुरी, 84. रमा चौधुरी, 85. जयदेव जानी, 86. श्रीजीवन्यायतीर्थः, 87. लीला राव दयालु, 88. नीर्पाजे भीमभट्टः, 89. कोगण्टी सीतारामाचार्यलुः, 90. जे०वि० चौधरी, 91. हरिदास सिद्धान्तवागीशः, 92. दीपक घोषः, 93. वनेश्वर पाठकः, 94. भास्कराचार्य त्रिपाठी, 95. रामजी उपाध्यायः, 96. वै० नागेश शर्मा, 97. विश्वेश्वर दीक्षितः, 98. महालिङ्ग शास्त्री, 99. मूलशंकर माणिकलाल याज्ञिकः, 100. मुल्लपूडि नारायण शास्त्री, 101. प्रभुदत्त स्वामी, 102. भरत पिषारटी, 103. वेलूरि सुब्बारावः, 104. कुटुम्ब शास्त्री 105.के० राजन्न शास्त्री, 106. हेच्०वि० नागराजराव्, 107. शिवसागर त्रिपाठी, 108. पद्म शास्त्री, 109. विद्याधर शास्त्री, 110. एस्० रङ्गनाथश्च।

अर्वाचीनकविमालायां जानकीवल्लभशास्त्री, प्रभात शास्त्री, 'ज्ञानोपाह्व' आचार्य डा० बच्चूलालोऽवस्थी, प्रो० बटुकनाथ शास्त्री, डा० शिवप्रसादो भारद्वाजः, डा० श्यामदेव पाराशरः, डा० शंकरदेव अवतरे, डा० शिवशरण शर्मा, श्रीश्री०सुन्दरराजः, डा० शिवदत्त शर्मा चतुर्वेदी तथा चान्ये नैके सम्प्रतिकाः सुप्रतिष्ठिताः प्रौढाः कवयो ग्रन्थकर्त्रा कथं न समावेशिता इत्येतस्य प्रश्नस्योत्तरदाने वस्तुतस्तु स एव प्रमाणम्। यतो हि मालायामष्टोत्तरं माणिक्यानि भवन्ति, एकश्च सुमेरुर्भवति इत्थं नवोत्तरशतकवीनामत्र गणनां विधाय स्वपरिचयं च दत्वा ग्रन्थकृत् ग्रन्थं परिपूर्णतां निनीषति; नवोत्तरशतसंख्यापर्यन्तं कीर्तितेभ्यः कविभ्यः कमपि बहिष्कर्तुं नेच्छतीत्यप्यन्यतमो हेतुर्भवेदित्यनुमातुं शक्यते। अथवा अपरामपि 'अर्वाचीनप्रौढकविमालां' प्रणेतुं तस्य योजना तन्मनसि तिष्ठतीत्यपि नास्त्यसम्भवम्।

इदं तु जानन्त्येव अर्वाचीनसंस्कृतकवितया परिचिता जना यत् श्रीजानकी-वल्लभशास्त्रिवर्यैः 1935 तमे ईशवीयेऽब्दे 'काकली'नाम गीतात्मकं काव्यं

प्रकाशितमासीत्। तस्य **'निनादय नवीनामये वाणि वीणाम्'** इतीयं गीतिरनेकैर्विद्वद्भिः संस्कृतच्छात्रैः, संस्कृतानुरागिभिश्च गायकैर्बहोः कालात् गीयते। वयोवृद्धैराचार्यश्रीसीतारामचतुर्वेदमहाभागैरेकदा मुजफ्फरनगरस्थे स्व-निवासस्थाने-'वेदपाठि-भवने' मह्यमियं गीतिः ससगीतं श्राविता। संस्कृतस्य लोकप्रियगीतिकास्वियमन्यतमा। प्रो० बटुकनाथशास्त्रिखिस्ते महाभागानां समस्या- पूर्तयः, श्रीप्रभातशास्त्रिणां गीतयः, आचार्यश्रीनिवासरथानां **'तदेव गगनं सैव धरा'**नाम्नि गीतिसटलने सटलिता गीतयः, आचार्यश्रीबच्चूलालावस्थिनां **'प्रतानिनी'** गीतिसटलने उर्दूगजलशैल्या रचिता संस्कृतरचनाः, डा० शिवप्रसाद- भारद्वाजस्य **भारतसन्देश-महावीरचरित-अभिनवरागगोविन्द- लौहपुरुषावदान- हूणपराजयादयो** महाकाव्यनाटकादिग्रन्थाः, डा० श्यामदेवपाराशरस्य चारुचरितचर्चा- त्रिवेण्यादि-गद्यपद्यपद्यात्मका ग्रन्थाः, डा० शिवशरणशर्मणां **'जागरण'**-सटलिता अन्याश्च गीतयः, श्रीश्री०सुन्दरराजस्य **'जगन्नाथस्तोत्र'- 'श्रीबदरीशतरग्गिणी'- 'सुरश्मिकाश्मीर'- 'हनूमत्पञ्चाशत्'- 'शरणागति- षोडशी'**-प्रभृतयो रचना, डा० शिवदत्तशर्मचतुर्वेदस्य **'स्फूर्तिसप्तशती' चर्चा**महाकाव्यादयो रचनाः नूनं हि विंशशताब्दीया उल्लेखनीया रचनाः यत्र भावगरिम्णा साकं शिल्पसौन्दर्यमपि सुतरां समुल्लसति। आशासे डा० रङ्गनाथमहाभागस्य लेखनी एतान् एतादृशानन्यांश्च कवीनपि वर्णयिष्यति।

**लोक-संस्कृतं**[60] चतुर्दशवर्षं पूरयति। अत्र बाललेखा बालनाटकानि बालगीतानि च विशेषतः प्रकाश्यन्ते। **'सत्यश्रवाः'** संगीतनाटकम् (14/2-3) संयुक्तांके (मई-अगस्त 1998) मासे प्रकाशितं जातम्[1]। विविधरागतालैः निबद्धं नाट्यमिदम् आश्रमविद्यालयस्य प्रांगणे 5-6-98 दिनांके अष्टवर्षीयैः बालकैः प्रयुक्तम्। कक्षाबन्धः गीतायाः, पद्यबन्धः विष्णुललितस्य स्वरबन्धश्च वासवसेनस्यास्ति।

**'सम्भाषणसंदेशे'** विविधा रचनाः प्रकाश्यन्ते यासु भाषान्तरप्रसिद्धाः शब्दा प्रातिपदिकरूपेण संस्कृतभाषायां निस्संकोचं गृह्यन्ते। यथा-

'देवदत्तः **टैक्सि**यानेन चेम्बूरोपनगरं प्रति गतवान्' (2/7/11), 'देवदत्तः

**सोफा**सन्दात् समुत्थाय संसृतया उक्तवान्। (2/7/11)। कथासु चित्राण्यपि दीयन्ते येन तत्र विशेषा रुचिर्जायते। गंगाराम शर्म-रवीन्द्रनाथगुरु- श्रीनिवाससिद्धप्रभृतिलेखकानां बालोपयोगिन्यो रचना अत्र पत्रे प्रकाश्यन्ते।

यस्मिन् काले वयं श्वसिमः सोऽस्ति कालः विचित्रः। एकतो वैज्ञानिकी प्रगतिरुत्कर्षं भजते अपरतश्च प्रकृतिर्वैक्लव्यं भजते। पर्यावरण-प्रदूषणस्य महती समस्या व्यावृतास्या सती विश्वं भाययति। आर्थिकविकासेन साकमेव महर्घताप्यभ्रंलिहतां याति। अयमपरो गण्डस्योपरि पिटको यत्प्रतिदिनं वृत्तपत्रेषु बलात्कार-हत्यापहरण- हिंसोत्कोच-लुण्ठन-नृहत्या-वधूदाह-निर्मर्यादयौनाचार-राजनीतिकभ्रष्टाचारापमिश्रणापवञ्चनाकाण्डादिविविधदुष्कृतीनामुदन्ताः, स्थूलाक्षरैः प्रकाशिताः सन्तः अनेकान् पाठकान् व्यथयन्ति, काँश्चन पुनः दुष्कृतीनामभ्यासाय प्रेरयन्ति। यदा पौनःपुन्येन दुर्वत्तानि जनानां हृदि स्थानमारक्षयिष्यन्ति तदा तेषां प्रभावो विजययात्रां स्वकीयां प्रारब्धुं सबलो भवेदेव। केचन ताः दुष्कृतीः नवनवाकारैर्व्यवहृत्य परिणंस्यन्ति केचन पुनस्ताः निर्विकाररूपेण सहिष्यन्ते। विंशशताब्द्या अन्तिमे दशके जनकैरेव दूषितानां कन्यकानां बहूनि वृत्तानि वृत्तपत्रेषु प्राकाश्यं गतानि। बलात्कारिणो जनका कं दण्डमलभन्त इति तु न प्रायो वृत्तपत्रेषु प्रकाश्यते। इमां दशां संस्कृतकविस्तु न शुभां मनुते। अत एवेत्थं तेन कथ्यते–

**कथंविधैः कुकर्मभिः कलंक्यतेऽद्य भारतम् ।**
**कथंविधैरुपक्रमैः प्रवञ्च्यतेऽद्य भारतम् ॥**

**समं स्वसंगिभिः पिता स्वपुत्रिकां भुनक्त्यसौ**
**विखण्ड्य कन्दुपावके प्रियां पतिर्दहत्यसौ**
**न वृत्तपत्रिकासु किं त्वया मयाद्य पठ्यते ?**

**गतत्रपैर्नराधमैर्यथा सखे ! विधीयते ।**
**न कल्पितं न कांक्षितं**
**यथास्ति मेऽद्य भारतम् ॥**[६१]

अपि च–

क्षायति प्रत्यहं सौख्यकादम्बिनी[६२]
हन्त शुष्कैव सम्बन्धमन्दाकिनी
सद्भविष्यं कथं रे तमिस्त्रावृतम् !
वेदनाव्याकुलं वेपते भारतम् ॥

यथा वा–

पितुः हिते
कन्या नन्दिनी भवति स्म
कस्यचित् न्यासरूपेण
तस्य समीपे
किञ्चित् कालपर्यन्तमेव
निवसनात् ।
परमद्य स पिता
फ्रायडवादी
सञ्जातः
दिनमासवर्षपर्यन्तम्
बलात्कारम्
कुर्वन्
न लज्जितः[63] ।

यथा वा–

निर्दोषाणां जनानाम्
प्रतिदिवसं हननम्
यौतुकस्य अग्निमुखे
पतिताः
प्रज्वलिताः
वध्वः
प्रतिदिनं वर्धमाना
महार्घता
जीवनस्य

**प्रत्येकं क्षेत्रे**
**दृढव्याप्तः**
**भ्रष्टाचारः**
**कालोऽयं साम्प्रतिकः**
**ईदृशः भयावहः[64] ।**
**निमिषे निमिषे विषमा विषमाः**
**सरसाः सरसा घटना दधती।**
**विषपानपरेऽपि प्रमोदभरे**
**जय भारतमेदिनि विश्वनुते ![६५]**

क्वचित् चीत्काराः क्वापि अपवञ्चनाकाण्डानि, क्वचित् धूर्तता, क्वचन मित्रघातः, कदापि दलाद्दले पलायनम् कदाचिच्च बम्बविस्फोटाः............

सर्वमपीदं संस्कृतरचनासु प्रतिबिम्बितं अस्ति। कालपात्रं किल वर्तमान-युगस्य अर्वाचीनसंस्कृतसाहित्यम्।

## ( ९ ) शोध-समीक्षा

राष्ट्रियसंस्कृतसंस्थानस्य विद्यापीठेषु, संस्कृतविश्वविद्यालयेषु, तथा चान्यान्येषु विश्वविद्यालयेषु पीएच.डी. स्तरीयं शोधमाचरन्ति नैके शोध कर्तारः। अर्वाचीनसंस्कृत- दूर्वा- पारिजात- विश्वसंस्कृत- शारदा- संस्कृतमञ्जर्यादिषु सावधिकपत्रिकासु शोधसंस्थानानां पत्रिकासु च अनेके शोध-समीक्षात्मका लेखा आधुनिकसंस्कृतसाहित्यमवलम्ब्य प्रकाश्यन्ते।

## ( १० ) दृश्यश्रव्यकार्यक्रमाः

'देववाणी-परिषद्-दिल्ली'-'दिल्ली संस्कृताकादमी'-'संस्कृतभारती'-'ध्वन्यालोक ऑडियो विजुअल प्रा.लि.'-'लोकभाषाप्रचारसमिति'-प्रभृतिसंस्था-भिरर्वाचीनसाहित्यस्य ध्वन्यंकनं कृत्वा ध्वनिपट्टिकाः प्रवर्तिताः। डॉ. दीपकघोषेणापि एका ध्वनिपट्टिका प्रवर्तिता यत्र टैगोरगीतानां संस्कृतकाव्यानुवादा ध्वन्यंकिताः संति। आशास्यते सूचनायुगेऽस्मिन् सञ्चारमाध्यमैरपि साहित्यिक-कार्यक्रमाः प्रस्तोष्यन्ते।

अर्वाचीनसंस्कृतसाहित्यविश्वस्य सम्यक् परिचयो भवेदित्यर्थं केचन उपाया अपेक्ष्यन्ते :-

(1) अर्वाचीनसंस्कृतसाहित्येतिहासलेखनम्

(2) अर्वाचीनसंस्कृतसाहित्यकोशनिर्माणम्

(3) अर्वाचीनसंस्कृतसाहित्ये भाषान्तरगृहीतानां संस्कृतीकृतानां शब्दानां कोशनिर्माणम्

(4) अर्वाचीनसंस्कृतसाहित्यकारकोशनिर्माणम्

(5) नूतनकृतिसमीक्षणार्थं प्रत्येकस्मिन् विश्वविद्यालये एकस्य प्रश्नपत्रस्य व्यवस्था

(6) अर्वाचीनसंस्कृतरचनानां कविमुखेन सहृदयप्रस्तोतृमुखेन वा ध्वन्यंकनम्

(7) अन्तर्जालके (इण्टरनेटे) अर्वाचीनसंस्कृतविषयमवलम्ब्य सूचनादानम्

(8) पत्रिकासु प्रकाशितानां साहित्यिकरचनानां सूचीकरणम्

उपर्युक्तोपायानां पूर्त्यर्थं केचन स्वल्पप्रयासा दृग्गोचरतां गताः सन्ति। पर्याप्तं क्रियते, पर्याप्तं च कर्तव्यत्वेनावशिष्यते। आशासे वडोदराधिवेशनमुपर्युक्तलक्ष्यप्राप्त्यै प्रचोदकतां यास्यति।

अहं नितरां प्रीतोऽस्मि यदस्मिन्नधिवेशने 'अर्वाचीनसंस्कृतविभागे' पञ्चाशदधिकानि पत्राणि प्रस्तोष्यन्ते। ये शोधपत्रप्रवाचका अत्र सम्प्राप्तास्तेभ्यः स्वागतं व्याहरन्नहं तान् शोधपत्रप्रस्तुत्यै सादरमावाहयामि ।

(डा० रमाकान्त शुक्लः)

प्रधानसम्पादकः-अर्वाचीनसंस्कृतम्

अध्यक्षः

अर्वाचीनसंस्कृतसाहित्यानुभागस्य

अ०भा० प्राच्यविद्यापरिषद्, पुणे एकोनचत्वारिंशदधिवेशने

१३.१०.१९९८

महाराजा सैयाजीराव विश्वविद्यालयः,

बडोदरा

# सन्दर्भाः


1. स्वतन्त्रतासंग्रामगीतिका श्रीअरविन्दस्य 'भवानीभारती' (डा०प्रफुखकुमार मिश्रः।) संस्कृतविमर्शः (Vol. 25-26, 1997) पृ०2 ।

2. Contribution of Gujrat to Sanskrit Literature (20th century—Dr. A.N. Jani) Published in 'Contribution of Gujrat to Sanskrit Literature (Dr. M. Prajapati Felicitation Volume) Publ. Dr. R.I. Prajapati Sastipurti Sanmana Samiti, Patan-384265, 1998 pp. 10-106

3. द्र०-Contribution of Gujrat to Sanskrit Literature Gen. Editor Dr. Gautam Patel, Editors M. K. Prajapati, Dr. Hersa Hudocha, Dr. H. R. Patel., Dr. R.I. Prajapati Sastipurti Sanmana Samiti Patan, Dr. M. I. Prajapati Sastipurti Sanmana Samiti Patan, 1998.
   1. Contribution of Gujarat to Sanskrit Literature (20th Century)—pp. 100—106
   2. Post Independance creative literatire in Sanskrit, pp. 107—116.
   3. Modern Sanskrit Poetry of Gujarat up to the end of 20th Century.
   4. A clere view of Maricika, Dr. Chandra Bhushan Jha pp. 349—352.
   5. Rasarajan and his Contribution to Modern Sanskrit Poetry, Dr. Rabindra Kumar Panda, pp. 553—558.
   6. Translation of Gujarat Poems into Sanskrit, Dr. Jashvanti Dave, pp. 359—363.

4. काव्यप्रशंसा, पृ०, बसवभारकरोदयः, 1998।

5. भरतचरितम् (महाकाव्यम्) नाग प्रकाशकः, दिल्ली। 1997।

6. बसवभास्करोदयः (महाकाव्यम्) (शिवकविः परड्डीमखिकार्जुनः) प्रकाशकः श्री कोट्टूरेश्वर ग्रन्थ प्रकाशनम्, कल्मठी, गंगावती-583227, 1998।

7. **बसवेश्वरभास्करोदयः** 4/46

८. तदेव 8/35

9. तदेव 2/2, 10

10. तत्रैव, पृ० XV

11. वामनचरितम् (महाकाव्यम्)-डॉ० इच्छाराम द्विवेदी 'प्रणवः'

12ण **चचवंशमहाकाव्यम्**–पं० रामचन्द्र (हरिशरण) अम्बिकादत्त शाण्डिल्यः। बैरक नं० 1451/1, सेक्शन 31ए, उल्हासनगर-4 ठाणे-221004, 1998

13. तदेव 16/70

14. **वैनायकम्**–प्रणेता डा० गजानन बालकृष्ण पळसुले, प्रका० शारदा गौरव ग्रन्थमाला, झेलम, पत्रकारनगरी, पुणे-411016, 16.2.1998

15. तदेव 15/47

16ण **गीतानन्तरसम्**–डॉ बटोही झा प्रवक्ता के०सं०वि०, लखनऊ 4।

17. **सीताभ्युदयम्** (नाटकम्) प्रणेता रामजी उपाध्यायः, प्रका० भारतीय-संस्कृति-संस्थानम्, 357, महामनापुरी, वाराणसी-5ए 1998

18. तदेव 28-29

19ण **बालनाट्यावलिः**–प्रा० रामचन्द्र (हरिशरण) अम्बिकादत्त शाण्डिल्यः। प्रका० अम्बिका पब्लिकेशन वर्क्स, बैरक नं० 1451/1, सेक्शन 31ए, उल्हासनगर-4 ठाणे-221004, 1998

20ण **मृत्युरयं कस्तूरीमृगोऽस्ति**–डा० हर्षदेवो माधवः, विक्रेता–पार्श्व पब्लिकेशन, अहमदाबादः-1, 1998

21. **स्नेहसौवीरम्** त्रिपाठी डॉ० भास्कराचार्यः। प्रकाशक नाग प्रकाशक, दिल्ली। 1997

22. **निष्क्रान्ताः सर्वे** समग्रकविता (प्रथमः खण्डः), डॉ० हर्षदेवो माधवः। प्रकाशक संस्कृतसाहित्यअकादमी, पुराण-विधानसभागृहम्, **गान्धीनगरम्**-382017ए 1997

23ण **निष्क्रान्ताः सर्वे**, पृ० 85

24ण **निष्क्रान्ताः सर्वे**, पृ० 310

25ण **स्वस्थ संस्कृत जीवनम्**–डॉ० कृष्णनारायण पाण्डेयः। प्रका० सरस्वती साहित्य संस्था, 295 जागृति इन्क्लेव, विकास मार्ग, दिल्ली-110092, 1997, पृ० 128।

26ण **त्रिपथगा**,–रामशंकर अवस्थी, नाग प्रकाशक, दिल्ली, 1997।

27ण **मंगल्या**-डा. अमरनाथ पाण्डेय, १९९८

28ण **काव्यकौतुकम्**-डॉ. राजदेव मिश्रः

29ण **काव्यसौरभम्**–डॉ० राजदेव मिश्रः, तारा बुक एजेंसी, वाराणसी 1997, 40 गीतानां संग्रहः ।

30ण काव्यसौरभम्, पृ० 29

31ण **विवेकसाहस्री** (प्रकाशाधीन-डा. उमारमण झा

32ण **सुभाषचन्द्रकाव्यवल्लरी**, सं. श्रीकृष्ण सेमवालः, प्रका. दिल्ली संस्कृत अकादमी, १९९८

33ण तत्रैव, 81 तमे पृष्ठे।

34. **गगनवाणी** (संस्कृतकवितासंग्रह)–रामकरण शर्मा। प्रका० प्रतिभा प्रकाशन, दिल्ली। प्र०सं० 1998

35. गगनवाणी, पृ० 3

36ण गगनवाणी, पृ० 20

37ण द्र० गगनवाणी, पृ० 67

38ण गगनवाणी, पृ० 109

39. गगनवाणी, पृ० 112

40. गगनवाणी, पृ० 114

41ण **गगनवाणी**, पृ० 120

42. **गगनवाणी**, पृ० 128

43ण **भावकादम्बकम्**–शंकरजी झा (प्रका०) अरुण पब्लिशिंग हाउस प्रा०लि०, चण्डीगढ़, 1996 (पृ० 26)

44. **'अभिनवकाव्याञ्जलिः'** क्षालयिष्यति कः कलङ्कम्–। प्रणेता–प्रो. केशवरामशर्मा, प्रकाशक–मनीषि मण्डल प्रकाशन, सोलन–१७३२१२ (हि.प्र.)

45ण **राष्ट्रार्चनम्**–आचार्य मूंगाराम त्रिपाठी। प्रका० काव्यायनम्, भोपाल, 1998

46ण **मातृगीतिकाञ्जलिः**–डा० हरेकृष्ण मेहेरः। प्रका० कलाहाण्डि, लेखक–कला–परिषद्, भवानीपाटना–766001 (उड़ीसा)

47ण **'भावपुष्पाणि'**–शरत्पूर्णिमा–गोविन्दलाल शाहः, प्रका० श्रीमती चन्दनबहेन शाह, 7, मुकुन्द–मनोरमा कम्प्लेक्स, अहमदाबाद–380015, 21.9.98

48ण **विंशशताब्दीसंस्कृतकाव्यामृतम्** (प्रकाशाधीनं)–संकलियता सम्पादकश्च–'अभिराज' डा. राजेन्द्रमिश्रः। प्रका. दिल्ली संस्कृत अकादमी।

49. **भक्तिरसामृतम्**–कविरत्न श्रीकृष्णसेमवालः, प्रका० रामजीलाल अग्रवाल, 15–16, बनारसीदास एस्टेट, तिमारपुर, दिल्ली–54, 1996

50ण **रासनायकनायिकम्**–कविपुण्डरीक सम्पूर्णदत्त मिश्रः प्रकाशकः लेखकः स्वयम्, उल्लासश्रीभवनम्, गोपालगढ़, भरतपुर-321001 (राज०) पृ. 72

51ण **नीरवस्वनः**–बनमाली बिश्वालः। प्रका० पद्मावती बिश्वालः, द्वारा डॉ० बनमाली बिश्वालः, गं०ना०झा०कें०सं० वि० इलाहाबाद-211002

52. **कथामन्दाकिनी**–ओम् प्रकाश ठाकुरः। प्रका० उत्तर प्रदेश संस्कृत संस्थान, लखनऊ-226007, 1998

53. 'संस्कृत-गद्य-लेखावली'-'गद्यरत्नमञ्जूषा'-'पद्य-मणिमाला'-'हास्यमधु-बिन्दवः'-लेखकः डा० बा०श्री० रामकृष्णरावः। प्रका० सुरभारती प्रकाशनम्, बेंगलूरु-560085

54. **छन्दोमयी**-डा. प्रकाश पाण्डे। नागपुर। १९९७ (अनूदिता)

55. **श्रीसमर्थरामदास स्वामीविरचितः श्रीमद्दासबोधः अनुवादकः**-श्री रा.ना. वेलापुरे। प्रका. संस्कृत दासबोध प्रकाशनसमितिः आगरकरपथः डोम्बिवली (पू)-४२१२०१, १९९७ द्वितीयः दशकः, प्रथमः समयः, मूर्खलक्षणम्

56. **साहित्यमातृका**-अरैयर् श्रीरामशर्मा, पद्य सं. १०६, प्राक. सर्वकारीयः संस्कृतकालेजः मेलुकोटे-४७१४३१, १९९७

57. **विश्वसंस्कृतम्** । सं० क० र० डॉ० श्यामदेव पाराशरः । विश्वेश्वरानन्द वैदिक शोध संस्थानम् । साधु आश्रमः, होशियारपुरम् । (34।2) जून 1997

58ण Modern Sanskrit Literature, Dr. S. Rangnath Pustakalya Publications, Banglore-41, 1997

59. **द्र. अर्वाचीनसंस्कृतम्**, १९९७ देववाणी-परिषद्, दिल्ली-११००५९

60ण **लोकसंस्कृतम्** (त्रैमासिकपत्रिका) संस्कृत कार्यालयः, श्रीअरविन्दाश्रमः पुदुच्चेरी-605002। (14/2-3) मई-अगस्त, 1998। पृ० 14-25।

61ण **'शिरो धुनोति भारतम्'**–अभिनव शुक्लः, अर्वाचीनसंस्कृतम् (17/3), 15 जुलाई, 1995

62. **वेपते भारतम्**–डॉ० जनार्दन प्रसाद पाण्डेयः 'मणिः', अर्वाचीनसंस्कृतम् (17/4), 1995

63. **''त्रासदी''**–डॉ प्रवेश सक्सेना 'अनुभूतिः' (संस्कृत-कविता-संग्रहः)। परिमल पब्लिकेशन्स, दिल्ली। 1996, पृ० 22

64ण **'एकविंशशताब्द्यां प्रवेशः'**–डॉ० प्रवेश सक्सेना, 'अनुभूतिः' (पृ० 48-49)

65ण **द्र. अर्वाचीनसंस्कृतम्, १९९८**

# A.I.O.C. 45th Session (R.S.V.P. Tirupati) Indian Aesthetics and Poetics Section Presidential Address

अखिलभारतीय-प्राच्यविद्या-सम्मेलनस्य पञ्चचत्वारिंशत्तमे अधिवेशने 'भारतीयसौन्दर्यशास्त्र-काव्यशास्त्रानुभागे' समुपस्थिताः विद्वांस शोधकर्तारश्च, भगवतो वेङ्कटेश्वरस्य कृपया सनाथितायां तिरुपतिनगर्यां राष्ट्रियसंस्कृतविद्यापीठे समोयाजितेऽस्मिन् सम्मेलने समवेतेभ्यः अत्रभवद्भ्योऽभिनन्दनानि व्याहरन्नहम् अमन्दमानन्दमनुविन्दामि।

अस्यानुभागस्य प्राक्तनान् अध्यक्षायान् प्रणम्याहं भारतीयसौन्दर्यशास्त्र मलङ्कारशास्त्रञ्च विषयीकृत्य संक्षिप्तान् विचारान् प्रस्तोतुम् प्रयते। यदिदं सौन्दर्यशास्त्रमिति पदं भारतीयैः प्रयुज्यते तत् एस्थेटिक्सपदस्य पर्यायत्वेन स्वीक्रियते। पाश्चात्त्यैः चिन्तकैः दर्शनशास्त्रस्य अङ्गत्वेन विचारितं इदं शास्त्रं स्वतन्त्रतया न गृहीतमासीत् परन्तु अद्यत्वे केषांचित् भारतीयविदुषां स्फुटविचारैः ग्रन्थैश्च भारतीयसौन्दर्यशास्त्रमिति नाम्ना व्यपदिश्यमानं शास्त्रं स्वतन्त्रशास्त्रत्वेनापि गृह्यते। अस्मिन् शास्त्रे ललितकलासु विद्यमानं सौन्दर्यरूपं सौन्दर्याकारं वा, भावकस्य चित्ते विद्यमानां सौन्दर्यानुभूतिं चावलम्ब्य पौरस्त्य-पाश्चात्त्य-चिन्तनदृशा विचार्यते।

डॉ. नगेन्द्र-डॉ. गोविन्दचन्द्रपाण्डेय-डॉ. रेवाप्रसाद द्विवेदी-डॉ. कान्तिचन्द्रपाण्डेय-प्रभृतिभिर्विद्वद्भिः स्वग्रन्थैः लेखैश्च अस्मिन् विषये विचारितम्।

यदिदं काव्यशास्त्रं पोइटिक्सेत्यस्य पर्यायरूपं शास्त्रं विद्यते, तस्य प्राचीनं नाम अलङ्कारशास्त्रमिति अधिगम्यते। ततश्च साहित्यविद्या साहित्यशास्त्रं वेति रूपेण अस्य शास्त्रस्य प्रसिद्धिः जाता। अद्यत्वे च विद्वांसः काव्यशास्त्रीयं सौन्दर्यशास्त्रीयं वा यदा ग्रन्थं लिखन्ति तदा उभयोरपि सिद्धान्तानां परिचयं प्रसक्तानुप्रसक्त्या एकत्रैव प्रस्तोतुं चेष्टन्ते। अतोऽद्यत्वे उभयोरपि अनयोः शास्त्रयोः घनिष्ठः सम्बन्धः स्वीकृतो दृश्यते। यद्यपि सूक्ष्मेक्षिकया परीक्ष्यमाणे तु अलङ्कारशास्त्रं साहित्यशास्त्रं

वा काव्यस्य विचारं करोति सौन्दर्यशास्त्रं च सर्वासां ललितकलानां विषये विचारं करोति।

इदानीमहं सौन्दर्यशास्त्रस्य विषये किञ्चित् विस्तरेण निवेदयितुमीहे। यद्यपि सौन्दर्यशब्दस्य वेदेषु प्रयोगो नस्ति, किन्तु, तत्पर्यायाणां प्रयोगस्तु वेदादारभ्य प्राप्यत एव।

चित्र-संगीत-वास्तु-काव्य-नृत्य-कलानां, तासां सौन्दर्यस्य सौन्दर्यानुभूतेश्च विविधाः प्रसङ्गा वेदेषु, वाल्मीकिरामायणे, महाभारते, भक्तिसाहित्ये अलङ्कतस्याहित्ये च प्राप्यन्त एव। वात्स्यायनकृतकामसूत्रे चतुष्षष्टिकलानामुल्लेखो वर्तते। तत्र चतस्रो ललितकला नाम्ना व्यपदिष्टाः सन्ति, एका च स्वरूपतः उपस्थिताऽस्ति। भरतमुनिकृते नाट्यशास्त्रे ललितकलात्वेन प्रसिद्धानां सर्वासामपि कलानां विवेचनं, प्रयोगप्रकारः तत्सौन्दर्यनिरूपणं च विशदतया वर्ण्यते। इत्थं भारतीयसौन्दर्यशास्त्रं स्वतन्त्रकलाशास्त्रत्वेन प्रतिष्ठामलभत यत्र सर्वासामपि कलानां विषये ग्रन्थकारैः सुष्ठु विचार्यते। अस्य विचारस्य भूमिका-रूपेण भारतीयाः सन्दर्भाः प्रायः समुपलभ्यन्ते। भारतीयसौन्दर्यशास्त्रं न कस्यचिद् दर्शनस्य अङ्गत्वेन अपि तु स्वातन्त्र्येण ललितकलानां, प्रसङ्गतश्च अन्यासामपि कलानां विषये विमृशति।

अथाऽलङ्कारशास्त्रमवलम्ब्य किञ्चित् प्रस्तूयते। महामहोपाध्याय पं. रेवाप्रसादद्विवेदी-महाभागैः 'साहित्यशारीरकम्', 'अलं ब्रह्म' चेति ग्रन्थद्वये किञ्च हिन्दीभाषया ग्रथिते "संस्कृतकाव्यशास्त्र का आलोचनात्मक इतिहास" इत्यस्मिन् ग्रन्थे 'अलं' शब्दस्य व्याख्या कृता। तेषां मतंमिदमस्ति यत् अलमिति पदं ब्रह्मेति शब्दस्य पर्यायः कथ्यते। अस्य च पुष्टिः अग्निपुराणेन क्रियते। इत्थं साहित्यागमः ब्रह्मविद्येति रूपेण स्वीकरणीया। तेषां वक्तव्यमत्रोद्धरामि–

"अपूर्वमिदं महावाक्यं यदुत 'अलं ब्रह्मे'-ति। वेदान्तानां प्रसिद्धमेव महावाक्यम् 'अहं ब्रह्मे'-ति। यस्तावत् तस्यार्थः स एवाऽस्यापि नूत्नस्य महावाक्यस्य 'अलं ब्रह्मे'-ति स्वरूपस्य। अहमिति वर्णमातृकायाः प्रत्याहारः अकारादारभ्य हकारं यावत् प्रसृतायाः। यथा चेदं तद् अभिनवगुप्तग्रन्थेभ्यः

स्पष्टम्। 'अल'-मित्यत्रापि प्रत्याहारत्वमेव पश्यामः। स च माहेश्वरस्य वर्णसमाम्नायस्य 'अइउ-ह' इत्येवंरूपेण प्रकाशितस्य। येयं वाङ्मयी सृष्टिः सा खलु वर्णसमाम्नायेऽस्ति समवेता। अर्थात्मिकाऽपि सृष्टिस्तादृश्येव। साप्यस्ति 'अल्' प्रत्याहारसमवेता। य एव हकारान्तो वर्णसमाम्नायप्रत्याहारः स एव 'लकारान्तस्त्रिभुवनप्रत्याहारः'। यथा चेदं तदपि 'आगम'-प्रमाणकम्। साहित्यशास्त्रस्यागमः 'अहङ्कारागम' इत्युदीरितस्तत्रभगवता 'अग्निपुराण'-कर्त्रा वेदव्यासेन'।

श्रीराधावल्लभत्रिपाठिभिरपि, अभिनवकाव्यालङ्कारसूत्राख्ये स्वकीये ग्रन्थे अलंभावस्य अस्यामेव दिशि व्याख्या विहिता। तद् इत्थं साहित्यागमः अलङ्कारशास्त्रं वा सर्वव्यापकस्य सच्चिदान्दरूपस्य ब्रह्मणः साक्षात्कारार्थम् एव प्रावर्तत इति निर्णीयते।

अयं भावः, अलंशब्दः अलङ्कारशब्दो वा भूषार्थक अलङ्कृतिशब्दात् व्यापकतरं अर्थं गृह्णाति।

अस्य तथ्यस्य परिप्रेक्ष्ये अलंशब्दः अलङ्कारशास्त्रस्य कञ्चन महिमातिरेकं पिशुनयति।

संस्कृतकाव्यशास्त्रे अग्निपुराणकार-भरतमुनि-दण्डि-भामह-उद्भट-आनन्दवर्धन- मुकुलभट्ट- राजशेखर- अभिनवगुप्त- क्षेमेन्द्र- भोजराज-महिममट्ट- मम्मट- रामचन्द्र- रुय्यक- शोभाकर- जयरथ- अजितसेन-श्रीकृष्णभट्ट- जयदेव- वाग्भट (१)-हेमचन्द्राचार्य-श्रीविद्यानाथ-विद्याधर -शारदातनय - विश्वनाथ-शिंग (सिंह) भूपाल-राजशेखर- रुद्रभट्ट - कविकर्णपूर - अप्पयदीक्षित - केशवमिश्र - विश्वनाथ-पण्डितराजजगन्नाथ आशाधर-भट्ट-नागेश-अच्युतराय-विश्वेश्वर-पण्डित-नरसिंहकविप्रभृतिभिः स्वस्वग्रन्थेषु बहु विचारितम्।

अधुनातनसाहित्यशास्त्रिभिः स्वामिकरपात्रेतिप्रख्यातनामभिः श्रीहरिहरानन्दसरस्वती-महाभागैः सनातनोपनाममहामहोपाध्यायरेवाप्रसाद-द्विवेदिभिः सर्वश्री-ब्रह्मानन्दशर्मणा, कपिलदेवब्रह्मचारिणा, शिवजी उपाध्यायेम, डॉ. जगन्नाथपाठकेन, डॉ. गोविन्दचन्द्रपाण्डेमहोदयेन, डॉ. हरिश्चन्द्रदीक्षितेन

डॉ. रमाशङ्करतिवारिणा, डॉ. चन्द्रमौलिद्विवेदिना, डॉ. शोभामिश्रया, डॉ. रामप्रतापवेदालङ्कारेण, विश्वेश्वरसिद्धान्त- शिरोमणिना, 'अभिराज' राजेन्द्रमिश्रेण राधावल्लभत्रिपाठिना च भक्तिरसार्णव-साहित्यशारीरक-नाट्यानुशासन-सौन्दर्यपञ्चाशिका-अलं ब्रह्म-वस्त्वलङ्कारदर्शन-काव्यसत्यालोक-भक्तिरसविमर्श-साहित्यसन्दर्भ-सौन्दर्यकारिका-सौन्दर्यदर्शनविमर्श- काव्यात्मनिर्णय- काव्यतत्त्वविवेक- रसवसुमूर्ति-शब्दशक्तिविवेक-चमत्कारविचारचर्चा-कारिका-ग्रन्थ- अभिराजयशोभूषण-अभिनवकाव्यालङ्कारसूत्र-प्रभृतिषु ग्रन्थेषु प्राचीनसाहित्यशास्त्रीयसिद्धान्तानां परिचयेन किञ्च पर्यालोचनेन सह नैजाः प्रसिद्धप्रस्थानव्यतिरेकिणो विचारा अपि उद्भाविताः। एभिरधुनातनकाव्यशास्त्रिभिः बहोः कालात्पूर्वं प्रतिष्ठापितेषु सिद्धान्तेषु हानोपादानं विधाय काव्यशास्त्रीयसिद्धान्तानां पल्लवनं कृतम्। विशेषतः काव्यविधाविवेचनप्रसङ्गे अद्यत्वे हिन्द्यादिभाषासु भोजपुरी-अवधी- ब्रज-प्रभृतिषु विभाषासु च प्रसिद्धानां उपन्यास-कथा-संस्मरण-रेखाचित्र- जीवनी-आत्मकथा-प्रभृतीनां गद्यविधानां गजलगीति-मुक्तछन्दो-लोकगीत- प्रभृतीनां पद्यविधानां च लक्षणान्यपि प्रदत्तानि। एवमेव अद्यत्वे एकांकनाटकत्वेन प्रसिद्धस्य रूपकस्य प्रहसनस्य च अधुनातनलक्षणान्येव प्रदत्तानि।

वस्तुतः चिरकालं यावत् प्रणीतस्य साहित्यस्य सर्वेक्षणं विधाय साहित्यशास्त्रिभिस्तत्सम्बद्धाः सिद्धान्ता आविष्करणीया एव। एतदतिरिक्तं विद्वद्भिः तत्तत्प्रान्तीयभाषासु सौन्दर्यशास्त्रं किञ्च काव्यशास्त्रमवलम्ब्य अन्तर्जालमाध्यमेन स्फुटनिबन्धमाध्यमेन ग्रन्थमाध्यमेन च स्व-स्व-विचाराः प्रस्तुताः प्रस्तूयन्ते च। तत्तद् भाषायाः वैशिष्ट्यं तत्तद्-भाषाछन्दोभिः वाग्योगैश्च प्रकाश्यते, अतः साहित्यशास्त्रस्य सौन्दर्यशास्त्रस्य वा अध्येतृभिः शोधकर्तृभिः अनुरागिभिः सहृदयैः च अधिकाधिकभाषा-ज्ञानमपि-अर्जनीयम्। यथा पूर्वाचार्यैः संस्कृत-माध्यमेन निबद्धेषु लक्षणग्रन्थेषु प्राप्तानि उदाहरणानि दत्तानि। यथा च अष्टादशभाषावारविलासिनीभुजङ्गस्य विश्वनाथस्य बहुभाषाविज्ञत्वं संसूच्यते तथैव अद्यापि विविधभाषाज्ञानं साहित्यशास्त्रमर्मज्ञानां

कृते आवश्यकं भवति। तदैव लोकमनस्सु प्रतिष्ठितस्य सौन्दर्यस्य सौन्दर्यानुभूतेश्च सम्यक् साक्षात्कारः कर्तु शक्यते।

अतः परमहं सौन्दर्यशास्त्रं अलङ्कारशास्त्रं चावलम्ब्य विगतेषु द्वित्रिवर्षेषु विहितं शोधकार्यमवलम्ब्य भवद्भ्यः काश्चन सूचना ददामि।

'ऐस्थेटिक्स' पर्यायरूपेण 'ऐन्द्रियसंवेदनाशास्त्रम्' इति पदमपि प्रयुज्यते। डॉ. नगेन्द्रेण स्वग्रन्थे अस्य पदस्य प्रयोगः कृतः। तेनात्र विषये वाउम गार्डन, कांट, मुनरो सी. विअर्डस्ले, हेलमुट कून्न, एफ.ई. स्पारशॉट, ई.एफ. कैरिटो, हीगेल-क्रोचे-बोसांके प्रभृतीनां मतानि वर्णितानि।

(**द्र. भारतीय सौन्दर्यशास्त्रावतारः** (डॉ. नगेन्द्रः) संस्कृतअनुवादक् अमीरचन्द्र शास्त्री, राष्ट्रियसंस्कृतसंस्थान् नई दिल्ली ११००२७, १९८७) श्रीमान् ब्रह्मानन्दशर्ममहाभागेन 'वस्त्वलङ्कारदर्शनम्' 'काव्यसत्यालोकं' इति ग्रन्थद्वयस्य विरचनं कृतम्। ग्रन्थेऽस्मिन् अनेन 'इयमात्मा हि काव्यस्य' (इयं सत्यानुभूतिः) इति स्वीकृतम्। काव्यस्य च लक्षणमपि प्रतिपादितम् अनेन-

**शब्दार्थवृत्तिसत्यस्य सुन्दरं प्रतिपादनम्।**

**काव्यस्य लक्षणं ज्ञेयम्॥**

**वस्त्वलङ्कारदर्शने-** 'अलंकार' शब्दास्य वामनाभिमतीकरणं भावार्थस्य च व्युत्पत्तीनां वर्णनं वर्तते। अलङ्कार्यस्य रूपे रसस्य प्रतिष्ठा कृता। अलङ्कारं च प्रातिभवस्तु मनुते ग्रन्थकर्ता। वाच्यार्थस्य यथार्थता- स्वभावोक्ति-तर्कमूलकालङ्कार- विरोधमूलकअलङ्कार, लोकनियम मूलकालङ्कार-शब्दालङ्कार-स्वभावोक्ति-अर्थान्तरन्यास-काव्यलिङ्ग- अनुभव-परिकर-विरोधालङ्कार-विभावना-विशेषोक्ति-अन्योन्य-असंगति- धर्मविपरीतता-व्याघात-विशेष-अधिक,-विपम- यथासंख्य-सार प्रभृतयः परिभाषिताः। विगतेषु कतिपयेषु दिवसेषु साहित्यशास्त्रीयान् विषयान् अधिकृत्य मौलिक-चिन्तनैर्विधाय अनेकाः स्थापनाः कृता। स्वामिकरपात्रमहाभागैः 'भक्तिरसार्णव' नाम्नि ग्रन्थे भक्तिरसस्य स्वतन्त्ररस- रूपेण सतर्कं प्रस्तुतिर्विहिता। भक्तिः केवलं भाव एवेति, ध्वनिसम्प्रदायस्य मतं तैः खण्डितम्। 'भक्तिरसार्णव' नामग्रन्धः साहित्यशास्त्रस्य मधुररसधारायाः प्रौढग्रन्थोऽस्ति।

रेवाप्रसादद्विवेदिमहोदयेन 'काव्यालङ्कारकारिका', 'साहित्यशारीरकं', 'नाट्यानुशासनम्', 'सौन्दर्यपञ्चाशिका:' किञ्च 'अलं ब्रह्म' इत्येतेषां ग्रन्थानां रचनया क्रान्तिकारि साहित्यशास्त्रीयं चिन्तनं विहितम्।

विगतवर्षद्वयान्तराले राष्ट्रियसंस्कृतसंस्थानस्य विविधेषु परिसरेषु काव्यशास्त्रं सौन्दर्यशास्त्रञ्च अवलम्ब्य नैकानि शोधकार्याणि सम्पन्नानि। तद्यथा अजिता मिश्रा ललितविस्तास्यालंकारिकमध्ययनम्, पंकजपाण्डेय: कविकर्णपूर- विरचितस्यालङ्कारकौस्तुभस्य परिशीलनम्, रविशङ्करमिश्र: कुमारभार्गवीयस्य काव्यशास्त्रीयमध्ययनम्, राज्यश्री: पाण्डेय: महर्षि-पिंगलप्रणीतच्छन्द:सूत्रोपरि विरचितानां वृत्तीनां तुलनात्मकं सामीक्षिकञ्चाध्ययनम्, कन्हैयालालझा: काव्यशास्त्रीयरसानुभूतिप्रक्रियाया: दार्शनिकमध्ययनम्, बदरीनारायणशर्मा सौन्दर्यशास्त्रालोके आचार्यगोविन्दचन्द्रपाण्डेय-प्रणीतस्य सौन्दर्यदर्शन- विमर्शग्रन्थस्य समीक्षणम्, अजयकुमारबासोतिया मुनिज्ञानसागरस्य अलंकारपरिशीलनम्, महेशकाकतर: बृहदारण्यकोपनिषद: अलंकारशास्त्रदिशा समीक्षात्मकमध्ययनम्, सुशीलकुमार: नीलकण्ठदीक्षितकृतशिवलीलार्णवस्य काव्यशास्त्रीयमध्ययनम्, महेन्द्रकुमार: कविकल्पद्रुमस्य काव्यधेनुव्याख्याया: सम्पादनं समीक्षणं च, रामप्रसादकन्नौजिया उद्भटकाव्यालंकारसारसारस्य समीक्षात्मकमध्ययनम्, रत्नाकरखुटिया साहित्यदर्षण-साहित्यभूषणयो: तुलनात्मकमध्ययनम्, इति च विषयमवलमब्य शोधकार्यमकुर्वन्।

अद्योद्घाट्यमाने अस्मिन्ननुभागे प्रस्तुत्यर्थ अनेकै: विद्वद्भि: मत्सकाशं शोधपत्रसार-रूपेण शोधपत्ररूपेण च स्वाभिप्राया: स्वविचाराश्च प्रहिता:। एतै: शोधपत्रैस्तै: रसास्वादनं, काव्यस्वरूपं, काव्यप्रयोजनं, औचित्यं, दोषान् अन्यांश्च तांस्तान् विषयान् अवलम्ब्य स्वाध्ययनस्य प्रतिफलनं कृतम्।

मया शोधपत्राणां शीर्षकाणि अधो दीयन्ते।

| **लेखकः** | **शोधपत्र शीर्षकम्** | **विषयः** |
|---|---|---|
| १. सविता कुमारी (छपरा) | | रसः |
| २. कुमारी विजय रञ्जन (छपरा) | शूद्रक और कालिदास के रूपकों में हास्य तत्त्व : एक अनुशीलन | रसः |
| ३. डॉ. नीलम् श्रीवास्तव | ध्वनि विरोधी आचार्य : कुन्तक और महीधर | ध्वनिविरोधः |
| ४. शीजा के.पी. अलीगढ़ | Consept of experiential aesthetic and impeienrtial tarnscedence by Nitya Chaitanya | रस |
| ५. स्मिता के कोलकाता | Aesthetic experience in karunras. | रस |
| ६. किरन तिरुवनन्तपुरम् | Greatness of Style and expression in Kadambari | |

विगतेषु कविपयेषु वर्षेषु काव्याशास्त्रपरकाः कतिपये महत्त्वपूर्णा ग्रन्थाः प्रकाशिता जाताः। तद्यथा–

१. श्रीमद्राधावल्लभत्रिपाठिप्रणीतम् अभिनवकाव्यालङ्कारसूत्रम् (हिन्दी-व्याख्यासहितम्) डॉ. रमाकान्तपाण्डयेन मूलग्रन्थस्य संस्कृतटीकाया हिन्दी-व्याख्या कृता। इतः पूर्व मूलग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः २००५ तमे क्रैस्ते वर्षे प्रकाशितो जातः।
(प्रकाशकः जगदीश संस्कृत पुस्तकालय झालानियों का रास्ता, किशनपोल बाजार, जयपुर-३०२००१, २००९)

२. **अभिराजयशोभूषणम्** मिश्रोभिराजराजेन्द्रः, (वैजयन्त प्रकाशनम्, ८ बाघम्बरीमार्गम्ः, भरद्वाजपुरम्, इलाहाबाद-२११००६, २००७)
अस्मिन् ग्रन्थे ग्रन्थकर्त्रा पञ्चसु उन्मेषेषु काव्यतत्त्वं निरूपितम्। पञ्चमे उन्मेषे ग्रन्थकृता गीतितत्त्व-गलज्जलिका छन्दोमुक्तक काव्यप्रकाराणि उपन्यस्तानि। गीतितत्त्वे गीतं, लोकगीतञ्च (Folk songs) व्याख्यातम्। ततष्च कजरी-नक्तक-प्रचरण-वटुक-रसिक-लांगलिक-स्कन्धहारीय- औष्ट्रहारिक-फाल्गुनिक-चैत्रक-सूतगृह-उत्थापनादिसंज्ञानां लोकगीतानां लक्षणोदाहरणपुरस्सरं व्याख्यानं कृतम्। विविधराज्येषु प्रचलितानां रागिणी-नाटी-गरबा-पण्डवानी-बाउल- अभंगादिलोकगीतानाम् उल्लेखोऽपि कृतः।

भूमिकायां ग्रन्थकृता अभिनवकाव्यशास्त्रस्यावश्यकता निरूपिता- "प्रायेण सर्वैरेव समागतविद्वद्भिः प्रत्यग्रकाव्यशास्त्रस्य समर्थनं कृतम्। तत्र कारणद्वयमासीत्। प्रथमं तावदिदं यत्प्रतिष्ठापिते खलु साम्प्रतिके लोकतन्त्रेऽपगते च राजतन्त्रे नृपैकमात्रकृतीनां विषये किं क्रियेत? द्वितीयञ्चापि कारणमिदं यत् संस्कृतेऽप्यधुना ऽन्यभारतीयभाषोपयुक्ता लोकप्रियाः काव्यप्रकारा निर्मीयन्ते नव्यैः कविभिः। परन्तु तेषां कृते नोपलभ्यते कश्चित् काव्यशास्त्रावलम्बः। अतएव कथा-नाट्यादिसम्बद्धानां नूतनकाव्यप्रकाराणामपि शास्त्रमपेक्षितमेव (नान्दीवक् १७)"

३. अलंब्रह्म (साहित्यशास्त्रे अपूर्वा दृक्) रचयिता महामहोपाध्याय आचार्य रेवाप्रसाद द्विवेदी। (कालिदाससंस्थानम् २८ महामनापुरी वाराणसी २२१००५, २००५)

अस्मिन् ग्रन्थे खण्डद्वयमस्ति-काव्यखण्डः नाट्यखण्डश्च। काव्यखण्डे ग्रन्थकृता १. अलंब्रह्म, २. किं तावत् काव्यतत्त्वम्, ३. काव्ये धर्मधर्मिभावविवेकः, ४. काव्यनिष्पत्तिप्रक्रिया, ५. किमिदं शब्दत्वं नाम, ६. साहित्यतत्त्वविमर्शः, ७. साहित्यदर्शने तात्पर्यरूपम्, ८. संस्कृतकाव्यशास्त्रे ध्वनिसंज्ञा, ९. रसस्य शाब्दत्वम्, १०. रसनिष्पत्ति-प्रक्रियायामुत्पत्तिवादः,

११. युक्तिवादे स्थायिभावाश्रयः, १२. कवी रसं स्वदते न वा?, १३. ध्वनिसम्प्रदाये केचन प्रश्नाः, १४. व्यंजनाविषये राजशेखरः, १५. भोजदेवस्य ध्वनिविचारः, १६. नैषधस्य २२/१५१ पद्यम्, १७. लक्षणायाः षड्विधत्वं हेत्वलंकारश्च, १८. अलंकारसर्वस्वे संशोधनम्, १९. जगन्नाथकाव्यलक्षणे दंशः, २०. रसगंगाधरे सन्दर्भशुद्धिः, २१. पण्डितरजकृता उत्प्रेक्षाभेदाः, २२. भारतीया व्याख्यापद्धतिः इति द्वाविंशति शीर्षकेषु विचारा उपन्यस्ताः। नाट्यखडे पञ्चसु शीर्षकेषु, २३. भरतनाट्यशास्त्रादिसम्पादनविधिः पाठसमीक्षा च, २४. कालिदासरूपकेषु वस्तुविभागः, २५. अवस्थार्थप्रकृतिसन्धिभेदः, २६. नाट्यप्रयोगे कुतपविन्यासः, २७. संस्कृतकाव्यशास्त्रं ब्रह्मविद्या कविना स्व चिन्तनमुपन्यस्तम्। ग्रन्थादौ अलंब्रह्मे ति ग्रन्थान्ते च संस्कृत काव्यशास्त्रं ब्रह्मविद्येति निबन्धद्वयं पुरातनीं स्थापनां मध्ये विलीनां पुनर्दृढप्रमाणैः पुष्णाति यत् काव्यशास्त्रं ब्रह्मविद्येति।

**अभिनवकाव्यशास्त्रम्** प्रणेता डॉ. शंकरदेवा अवतरे। (साहित्य सहकार दिल्ली-११००३२। २०००) अत्र दशसु अध्यायेषु कविना साहित्यशास्त्रीयाः विषया विवेचिताः। काव्यविधानां परिचयोऽत्र नास्ति। कविनोक्तम्

**संस्कृतकारिकाबद्धो ग्रन्थोऽयं मूलतः कृतः।**
**हिन्दीवृत्तिविवृतिभ्यां सौकर्यार्थं वितन्यते॥**
**परिवर्ध्य परिष्कृत्य व्यवस्थाप्य तथा क्वचित्।**
**प्राचीनं काव्यशास्त्रं यत् तदेवाभिनवीकृतम्॥** (ग्रन्थारम्भे)

**संस्कृत काव्यशास्त्र का आलोचनात्मक इतिहास**—प्रणेता—महामहोपाध्याय आचार्य रेवाप्रसाद द्विवेदी। (कालिदाससंस्थानम् वाराणसी-५ २००७)

ग्रन्थकृतास्मिन् ग्रन्थे पञ्चसु विभागेषु त्रिसहस्राब्दव्यापिनः

संस्कृतकाव्यशास्त्रस्य आलोचनात्मकः परिचयः प्रदत्तः। तेन प्रथमे विभागे सिद्धान्ताः, कल्पाः सम्प्रदायाः आलोचिता येषु अलन्त्वकल्पः विदुषामौत्सुक्यपरिवर्धकः सन्तोषदायी च। अत एवं काव्यशास्त्रं ब्रह्मविद्येति स्थापना भवति।

सौन्दयर्थशास्त्रमलङ्कारशास्त्रमधिकृत्य विद्वद्भिर्बहु विचारितं विचार्यते च। अस्यां विचारपरम्परायां स्वयोगदानार्थमत्रभवन्तः अत्रभवत्यश्च सवहुमानं प्रार्थ्यन्ते। काव्यशास्त्रविनोदेन कालो गच्छतु धीमताम्।

२.६.२०१० विदुषामाश्रवः

(रमाकान्तशुक्लः)

अध्यक्षः

सौन्दर्यशास्त्र-काव्यशास्त्रानुभागस्या

अखिलभारतीयप्राच्यविद्यासम्मेलनपञ्चचत्वारिंशमधिवेशनम्

राष्ट्रियसंस्कृतविद्यापीठं, तिरुपति

# आचार्यश्रीरमेशचन्द्रशुक्लप्रणीते 'नवभारतपुराणे' संस्कृतविदुषामुल्लेखः

**–डॉ. रमाकान्तशुक्लः**

आचार्यश्रीरमेशचन्द्रशुक्लैः प्रस्तुतपंक्तिलेखकस्य प्रार्थनामङ्गीकृत्य "नवभारतपुराणम्" इत्यस्यैकादशाध्यायात्मकस्य संस्कृत-महाकाव्यस्य रचना कृता यस्य प्रकाशनं दिल्लीस्थ-देववाणीपरिषदा १९८५ तमखैष्टेऽब्दे कृतम्। "अर्वाचीनसंस्कृते" ऽप्यस्य प्रकाशनं १९८६ तमे खैष्टेऽब्दे जातम्। अस्य काव्यस्य सप्तमेऽध्याये कविना संस्कृतस्य स्वसमकालीनानां विदुषां कवीनां चोल्लेखः कृतोऽस्ति येषु सर्वश्री-हरिहरानन्द आरण्यकः, आचार्यबदरीनाथशुक्लः, जयमन्तमिश्रः, श्रीधरभास्कर वर्णेकरः, रामजी उपाध्यायः, ए. सदाशिव डाँगे, विद्याधरशास्त्री, वी. राघवन्, आचार्यविश्वेश्वरः, देवीप्रसादशुक्लः, बलदेव उपाध्यायः, कृष्णप्रसाद (घिमिरे), नृसिंहदेवशास्त्री, द्रव्येशझाः, डांगे, सुरेशचन्द्रबनर्जी, भारतेन्दुद्विवेदी, ब्रह्मानन्दशुक्लः, विशुद्धानन्दशास्त्री, परमानन्दशास्त्री, पन्नालालजैनः, फूलचन्द्रजैनः "प्रेमी", मातृदत्तत्रिवेदी, एस.एन. शुक्लः, एस.पी. सिंहः, उमेशः, कृष्णमोहनठक्कुरः, कैलासपतित्रिपाठी, रामप्रसादत्रिपाठी, गुलामदस्तगीरः, ए.एन. पाण्डेयः, ब्रजमोहनपाण्डेयः, एच.सी. पटयालः, राजनाथपाण्डेयः, एच.एल. रस्तोगी, शिवदत्त आचार्यः, श्रीवरचतुर्वेदी, ओट्टूर उण्णि नम्बूदिरीपादः, मनोहरलाल गौडः, सुरेन्द्रदीक्षितः, के.सी. आचार्यः, विमला अग्रवालः, रामकृष्ण आचार्यः, सिन्धुडांगे, जी.वी. देवस्थली, बी.एन. कल्ला, पद्मनेत्रः, त्र्यम्बकचिन्तामणिकेङ्घे, एस.डी. लद्दू, जी.बी. पलसुले, उदयचन्द्रजैनः, रामकरणशर्मा, स्वामिनाथः, वेदानन्दझाः, चारुदेवशास्त्री, बटुकनाथः शास्त्री खिस्ते, मिथिलेश मिश्रः, गणेशथिटे, रामभूलः, देवीदत्तशर्मा, कृष्णकान्तशुक्लः, पण्डिताक्षमारावः, उमाकान्तशुक्लः रमाकान्तशुक्लः, विष्णुकान्तशुक्लः, हरवंशलालशर्मा,

श्रीनिवासमिश्रः, टी. गणपति शास्त्री, कस्तूरी रंगाचार्यः, डॉ. गोवर्धननाथशुक्लः, सरोजशर्मा, डॉ. बाबूरामयादवः, आचार्यसोमदत्तगौडः, डॉ. सत्यप्रकाशशर्मा, चिन्तामणिशुक्लः, डॉ. कर्णसिंहः, डॉ. वासुदेवकृष्णचतुर्वेदी, डॉ. शशिधरशर्मा, डॉ. कपिलदेव द्विवेदी, पं. भवानीदत्तशास्त्री, आचार्यवैद्यनाथझा, आचार्यकृष्णानन्दशास्त्री, पं. ताराचरणभट्टाचार्यः, पं. वनमाली चतुर्वेदी, पं. रघुनाथप्रसादचतुर्वेदी, पं. मथुरानाथशुक्लः, कथासम्राट् प्रेमचन्दः, श्री एस. सुन्दरराजन, डॉ. वी. कण्णन, पं. टी. वी. परमेश्वर अय्यर, डॉ. वीरभद्रमिश्रः, प्रभाकर रामरत्नशास्त्री, आचार्य पं. रघुनाथ शर्मा, रेवाप्रसाद द्विवेदी वसन्त अनन्त गाडगीलश्च।

एतेषु विद्वत्स्वद्याधिकांशा विद्वांसः कीर्तिशेषाः सन्ति येषां विषये नवभारतपुराणकारेण पद्यमयी प्ररोधना कृता। सर्वश्री- हरिहरानन्द आरण्यकः सांख्ययोगशास्त्र पारङ्गत आसीत्।[१] आचार्यबदरीनाथशुक्लो न्यायवैशेषिकविद्वानासीत्। स वाराणसेयसंस्कृत-विश्वविद्यालये कुलपतिरप्यासीत्।[२] आचार्यजयमन्तमिश्रः शुद्धान्तकरणः शास्त्राचार्यशिरोमणिः दरभङ्गासंस्कृतविश्वविद्यालयस्य कुलपतिरासीत्। स कलिकातापुरे १९९७ तमे ख्रैष्टेऽब्दे समायोजितेऽखिलभारतीयप्राच्यविद्यापरिषदोऽष्टात्रिंशत्तमेऽधिवेशने महाध्यक्षोऽप्यासीत्।[३] डॉ. श्रीधरभास्कर वर्णेकरः प्रसिद्धो महाकविरासीत्। तस्य विषये कविर्लिखति–

**विद्वान् श्रीधरभास्करो मतिमतां मान्योऽस्ति वर्णेकरः**
**अध्यक्षः सुरभारतीशुभविभाभास्वद्विभागे क्षितौ।**
**ख्याते नागपुरे प्रिये सुललिते श्रीविश्वविद्यालये**
**सेव्यो भाति मनीषिणां प्रियमहाकाव्यादिकर्ता महान्॥**[४]

डॉ. रामजी उपाध्यायः सागरविश्वविद्यालये संस्कृतविभागाचार्याध्यक्ष आसीत्। तेन 'सीताभ्युदय' नाटकस्य रचना कृता, अनेके ग्रन्थाः प्रणीताः, 'सागरिका' त्रैमासिकी संस्कृतपत्रिका च सम्पादिता।

**अध्यक्षोऽमरवाग्विभागविदिते श्रीविश्वविद्यालये**
**सर्वत्रश्रुतसागरे भरतभूमध्यप्रदेशे स्थिते।**
**साहित्यादिकशास्त्रदर्शनपटुश्रेष्ठश्चकास्ति क्षमा-**
**धीमन्मण्डलमान्यडॉक्टर उपाध्यायो ह्यसौ रामजी॥**[५]

श्री. ए. सदाशिवडाँगेमहाभागो मुम्बईविश्वविद्यालये संस्कृतविभागाचार्याध्यक्ष आसीन्। तस्य परिचयनित्थं ददाति कविः–

**पाली-प्राकृत-संस्कृताख्यवचसां भव्ये विभागेऽग्रणीः**
**ए. डाँगेऽस्ति सदाशिवो विजयते विद्याम्बुधिः पण्डितः।**
**क्षोणीविश्रुतमुम्बईविलसितश्रीविश्वविद्यालये**
**मुख्यः सन् बुधमण्डनं कविवरः प्रोफेसरश्लाघितः॥**[६]

श्रीविद्याधरः शास्त्री साहित्यदर्शनपण्डितः कविश्चासीत्। आलीगढमुस्लिमविश्वविद्यालयेऽपि स प्राध्यापक आसीत्।[७] डॉ. वी. राघवनमहोदयो विद्वान् कविश्चासीत्। तस्य 'अनार्कली' नाटकं प्रसिद्धम्। १९६१ तमे ख्रैष्टेऽब्दे तेन श्रीनगरेऽखिलभारतीप्राच्यविद्यासम्मेलनस्यै कविंशेऽधिवेशने महाध्यक्षता कृता डॉ. राघवन् महोदयस्य विषये कवेः कथनमस्ति–

**श्रीवी. डाक्टरराघवन् ऋजुमनाः साहित्यकर्ता सुधीः**
**साहित्यज्ञसमाजसेव्यचरणो वक्ता महाँलेखकः।**
**प्राच्याप्राच्यवचोविदग्धसुमतिर्दिग्दक्षिणस्याः प्रधीः**
**नानाग्रन्थसमुच्चयप्रणयने सोऽभूत् प्रसिद्धो महान्।**[८]

आचार्य विश्वेश्वरो वृन्दावनगुरुकुले आचार्य आसीत्। तेन ध्वन्यालोकाभिनवभारतीप्रेभृतिग्रन्थानां व्याख्या प्रणीता।[९] देवीप्रसाद शुक्लः कविः शास्त्रज्ञश्चासीत्।[१०] आचार्यबलदेवोपाध्यायः प्रसिद्धः संस्कृतविद्यान् ग्रन्थकर्ता चासीत्। तत्कृतं संस्कृतसाहित्येतिहासं प्रायः सर्वेऽपि छात्राः पठति स्म। भारतस्य राष्ट्रपतिना स 'पद्मविभूषणेन' सम्मानित आसीत्। तद्विषये कविर्लिखति–

**आचार्यो बलदेवसंज्ञक उपाध्यायो यशस्वी कृती**
**भूयिष्ठा व्यदधात् कृतीरनुपमाः शिक्षार्थिविद्वत्प्रियाः।**
**साहित्यप्रियकान्तिवृद्धिपरके कार्ये रतो दृश्यते**
**काशीतीर्थसुधीसमाजविदितः साहित्यविद्याधरः॥**[११]

'कविरत्नं' श्रीकृष्णप्रसादघिमिरे नेपालदेशीयः संस्कृतमहाकविरासीत् येन 'श्रीकृष्णचरितं' नाम महाकाव्यं प्रणीतम्।[१२] आचार्यनृसिंहदेवशास्त्री अविभाजितपञ्चाम्बुप्रान्ते न्यायसाहित्यादिशास्त्राटवीपञ्चानन आसीत्। अस्मत्पितृचरणैः (श्री. ब्रह्मानन्दशुक्लैः) तेभ्यो 'न्यायसिद्धान्तमुक्तावली' अधीतासीत्। तद्विषये कवेः कथनमस्ति–

**पाञ्चालेषु शिवाङ्घ्रिपद्मनिहितस्वान्तोऽभवद् धर्मभृत्**

**विख्यातोऽतिमनोहरेऽमृतसरे विद्वान् नृसिंहो महान्।**

**तस्याध्यापनपद्धतिर्वटुजनानत्यन्तमप्रीणयत्**

**तस्मात् तस्य सहस्रशः सुरुचयः शिष्या अभूवन् गुरोः॥**[१३]

पं. द्रव्येशझाः पण्डितवेदानन्दझा-महाभागस्य पिता पदवाक्य-प्रमाणपारावारीण आसीत्।[१४] डॉ. भारतेन्दुद्विवेदी शान्तिनिकेतने प्राध्यापक आसीत्।[१५] श्रीब्रह्मानन्दशुक्ल एततपंक्तिलेखकस्य पिता गुरुश्चास्ति। स खुर्जास्थे श्रीराधाकृष्णसंस्कृतमहाविद्यालये साहित्यविभागाध्यक्षः प्राचार्यश्चासीत्। तद्विषये कवेः कथनमस्ति–

**गान्धी गीतो भुवनविदितो नेहरूश्चापि येन**

**साहित्यज्ञप्रियबुधजगद्वन्दनीयः सः आसीत्।**

**शुक्लोपाह्वो मधुरकवितासृष्टिकर्ता कवीन्द्रो**

**ब्रह्मानन्दः सुजनकुलभूभूषणं साधुचित्तः॥**[१६]

आचार्यविशुद्धानन्दः शास्त्री गुरुकुल-वृन्दावनस्य कुलपतिरासीत्। तेन अनेकानि काव्यानि प्रणीतानि। व्याकरणस्य स महान् पण्डित आसीत्।[१७] डॉ. परमानन्दशास्त्री अलीगढमुस्लिमविश्वविद्यालये संस्कृतविभागाचार्याध्यक्ष आसीत्। तेन 'जनविजयमहाकाव्यस्य' रचना कृता। तस्यानेका रचना अर्वाचीनसंस्कृतेऽपि प्रकाशिता अभूवन्।[१८]

साहित्याचार्यपन्नालालजैनः सागरनिवासी अनेकेषां जैनपुराणानां हिन्द्यनुवादकर्त्तासीत्।[१९] डॉ. फूलचन्द्र 'प्रेमी' भारतस्य राष्ट्रपतिन्य विगतवर्षे सम्मानप्रमाणपत्रेण सत्कृतः। सोऽद्यत्वे वाराणसीमधिवसति। तद्विषये कविनोक्तम्–

**'प्रेमी'जैनजगन्मनीषिनिवहे स्तुत्योऽस्ति वाराणसी-**

**पुर्यां लोकहितस्थसंस्कृतवचःश्रीविश्वविद्यालये-**

**ऽध्यक्षो दर्शनशास्त्रजैनपरकख्याते विभागोत्तमे**

**भाति स्वान्तसमुज्ज्वलः शुचिमतिः श्रीफूलचन्द्रो भृशम्॥**[२०]

डॉ. मातृदत्तत्रिवेदी लखनऊविश्वविद्यालये प्राध्यापक आसीत्।[२१] डॉ. एस. एन. (शंकरनारायणः) शुक्लः प्रयागविश्वविद्यालये प्राध्यापक आसीत्।[२२] डॉ. सत्यप्रकाशसिंहोऽलीगढमुस्लिमविश्वविद्यालये आचार्य आसीत्। तेनानेके ग्रन्था अपि लिखिताः।[२३] श्रीकृष्णमोहनठक्कुरो वाराणस्यां श्रीरणवीरसंस्कृतमहाविद्यालये प्राचार्य आसीत्।[२४] डॉ. कैलासपति त्रिपाठी वाराणसेयसंस्कृतविश्वविद्यालये साहित्यविभागाध्यक्ष आसीत्।[२५] आचार्यरामप्रसादत्रिपाठी काश्याः प्रसिद्धो वैयाकरण आसीत्।[२६] श्री गुलामदस्तगीरो 'विश्वभाषा' पत्रिकायाः सम्पादकोऽस्ति।[२७] डॉ. अमरनाथपाण्डेयः काशीविद्यापीठे संस्कृतविभागाचार्याध्यक्षः किञ्च 'भास्वती' पत्रिकायाः सम्पादक आसीत्।[२८] श्री गायत्रीप्रसादपाण्डेयो ज्ञानपुरमहाविद्यालये प्राध्यापक आसीत्।[२९] आचार्यः श्रीवरचतुर्वेदी भागवतपण्डितः श्रीवासुदेवकृष्णचतुर्वेदस्य जनकश्चासीत्।[३०] श्री ओट्टूर उण्णि नम्बूदिरीपादः 'राधाकृष्ण-रसयन' काव्यस्य कर्तासीत्। राधाकृष्णरसायनस्य प्रकाशनं दिल्लीस्थदेववाणी-परिषदा कृतम्।[३१] डॉ. मनोहरलालगौडो व्याकरणाचार्यः किञ्च हिन्द्यां पीएच.डी. आसीत्। घनानन्दमवलम्ब्य तस्य ग्रन्थो लोकप्रिय आसीत्।[३२] श्री के. सी. आचार्य उत्कलविश्वविद्यालये संस्कृताचार्य आसीत्।[३३] श्री रामकृष्ण आचार्य आगरास्थे बलवन्तराजपूतमहाविद्यालये संस्कृतप्राध्यापक आसीत्।[३४] डॉ. सिन्धु डाँगे मुम्बईस्थे एल्फिन्स्टन कालेजे प्राध्यापिकासीत्।[३५]

डॉ. जी. वी. देवस्थली पूनास्थे शोधसंस्थाने आचार्य आसीत्।[३६] शैवागमस्य विशेषज्ञो डॉ. बी. एन. कल्लामहाभागः कश्मीरस्य प्रसिद्धो विद्वानासीत्।[३७] डॉ. चिन्तामणित्र्यम्बककेङ्घ्येऽलीगढमुस्लिमविश्वविद्यालये रीडर आसीत्।[३८] डॉ. एस. डी. लद्दू पुनानगस्य प्रसिद्धोविद्वान् आसीत्।[३९] डॉ. गजानन बालकृष्ण पलसुले पूनानगस्य प्रसिद्धो विद्वान् कविश्चासीत्। तस्य प्रसिद्धा गीतिरस्ति–'प्रवहतां संस्कृतमन्दाकिनी'ति। तस्य विषये कवेः कथनमस्ति–

**जी बी संज्ञककोविदः पलसुले पूनास्थिते विश्रुते**
**वाग्मी शास्त्रविचक्षणः सुरगिरो यो विश्वविद्यालये।**
**बी ओ आर निदेशको बुधजगन्मान्यो भवन् राजते**
**धीमल्लेखकवृन्दमस्तकमणिः सत्कीर्तिदीप्त्युज्ज्वलः॥[४०]**

डॉ. उदयचन्द्रजैन उदयपुरविश्वविद्यालये पालिप्जाकृत-पण्डित आर्चार्य आसीत्।[४१] डॉ. मण्डनमिश्रो दिल्लीस्थ लालबहादूरशास्त्रिसंस्कृतविद्यापीठस्य संस्थापकाचार्य आसीत्।[४२] आचार्यवेदानन्दझाः दिल्लीस्थ-श्रीमोतीनाथसंस्कृत महाविद्यालये प्राचार्य आसीत्। स देववाणी-परिषदोऽध्यक्षोऽप्यासीत्।[४३] श्रीचारुदेवशास्त्री प्रसिद्धो वैयाकरणः किञ्च डॉ. सत्यव्रतशास्त्रिणः पितासीत्।[४४]

आचार्यो बटुकनाथशास्त्री खिस्ते काश्याः प्रसिद्धो विद्वान् कविश्चासीत्।[४५] अस्मदग्रजो डॉ. कृष्णकान्तशुक्लः बरेलीकालेजे संस्कृतविभागाध्यक्षः कविश्चासीत्। स देववाणी-परिषदोऽध्यक्षश्चाप्यासीत्। स कवेर्घनिष्टं मित्रमासीत्। तद्विषये कवेः कथनमिदमस्ति-

**शुक्लो डॉक्टरकृष्णकान्तसुकृती मान्यो महीयान् सताम्**
**आचार्योऽखिलशास्त्रसेतुसुभगो विद्यावतामर्चितः।**
**ग्रन्थः शोधपरो हि तेन रचितो रत्नाकरे कॉलिजे**
**ह्यध्यक्षः सुरवाग्विभागरुचिरे ख्यातो बरेल्यां प्रधीः॥[४६]**

क्षमाराव पण्डिता प्रसिद्धा कवयित्री आसीत्।[४७] अस्मदग्रजो डॉ. उमाकान्तशुक्लः शास्त्रवित् कविश्चास्ते। तस्य 'मङ्गल्या', 'परीष्टिदर्शनम्', 'चाङ्गेरिका' प्रभृत्यो रचनाः प्रसिद्धाः सन्ति। तमवलम्ब्य कवेः कथनमस्ति-

**उमाकान्तः शुक्लः सरसकवितायाः प्रणयने**
**कवीन्द्रो विख्यातो बुधवरसमाजादृतपदः।**
**प्रधीशः सौम्योऽसौ प्रकृतिसरलः शास्त्रकुशलः**
**सदा स्वाध्याये स्वं गमयति मुदा सर्वसमयम्॥[४८]**

भवतामग्रे भाषमाण एतत्पंक्तिलेखकोऽपि कवेराशीर्वादभाजनं जातः। गुरुणा शिष्यस्य विषये इत्थमुक्तम्-

**वाग्ग्मिश्रेष्ठकविप्रियः परिषदो वाचः सुराणां महान्**

**मन्त्री भारतभूबुधोत्तमरमाकान्तो हि शुक्लो युवा॥**

**सर्वस्मिन् भुवने स देववचसस्तन्वन् यशः शोभते**

**कालेजेऽथ च शिक्षकः सुविदितः श्रीराजधानीस्थिते॥**[४९]

अस्मदनुजो डॉ. विष्णुकान्त शुक्लः 'स्फाटिकीमालायाः' कर्तास्ति। सहारनपुरस्थे जे. वी. जैनकालेजे हिन्दीविभागाध्यक्षः (इदानीं सेवानिवृत्तः) भागवतप्रवचनकर्तास्ति। तस्य विषये कवेरुक्तिरस्ति–

**साहित्याम्बरचन्द्रगौरवधरोऽसौ स्वाभिमानप्रियो**

**वाणीकौशलपेशलः सुरुचिरः प्रज्ञाश्रियाराधितः।**

**शुक्लः शिक्षकलोकविश्रुतयशा विद्यानवद्यो महान्**

**साध्वाचारविचारचारुचरितः श्रीविष्णुकान्तः सुधीः॥**[५०]

डॉ. गोवर्धननाथशुक्लोऽलीगढमुस्लिमविश्वविद्यालये आचार्य आसीत्। तद्विषये कविः कथनमस्ति–

**श्रीगोवर्धननाथशुक्लसुजनः शीलश्रिया शोभितो**

**मन्येऽस्यामवनावभून्मनुजतामूर्तिः प्रकाशं गता।**

**आचार्यर्षभवल्लभस्य विषये श्रीडॉक्टरो गौरवो-**

**त्कर्षोद्भूतसमुज्ज्वलाधिकशुभं कार्यं व्यधात् पावनम्॥**[५१]

राजनेतृषु डॉ. कर्णसिंहस्यादरोऽतितरामस्ति। सः संस्कृतस्य विद्वानस्ति। तद्विषये कविना कथितम्–

**विद्वान् डॉक्टरकर्णसिंहसुजनः काश्मीरभूपर्षभः**

**स्वातन्त्र्यं लभतेस्म भारतमही धीमान् तदा सत्वरम्।**

**सम्प्रेक्ष्येति समग्रराज्यमतुलं लीनं व्यधाद् भारते**

**स्वाधीनश्वसने सुविज्ञजगतीमौलेर्मणः सादरम्॥**[५२]

विश्रुतमहाकवेराचार्य-रेवाप्रसादद्विवेदविषये कवेः कथनमस्ति–

**काशीवासी मनीषी बुधवरभुवनख्यातमान्यो विपश्चित्**
**काव्यं सीताचरित्रं करुणरसमयं तस्य काव्योत्तमेषु।**
**लोके विद्वज्जनानामखिलमपि कुले प्रीणयद्राजतेऽद्य**
**नानाग्रन्थप्रणेता कविषु सुविदितो भाति रेवाप्रसादः।।**[५३]

छातानिवासिनः 'अम्बाकर्त्री टीकाकर्तुः पण्डितरघुनाथशर्मणो विषये कविः कथयति–

**आचार्यों रघुनाथशर्मसुमती रत्नाकरो भारते**
**शास्त्राणां बलियागते परिसरे छाताधिवासी सुधीः।**
**विद्वान् वाक्यपदीयविश्रुतकृतिं व्याख्यादिना भूषितां**
**कृत्वासौ व्यदधाद्धितं भूवि सतां तन्वन् यशः शोभते।।**[५४]

'शारदा' पत्रिकासम्पादकस्य पं. वसन्त अनन्त गाडगीलस्य विषये कवेः कथनमस्ति–

**विद्वान् गाडगिलो वसन्तमतिमान् सम्पादकः शारदा-**
**नाम्न्याः विश्वपरोपकारहृदयः सः पत्रिकाया इह।**
**शास्त्रज्ञोऽस्ति सतां मतोऽखिलभुवो मेधाविनामादृतः**
**सेवायां सुधियोऽनिशं सुरगिरोर्व्यर्त्यत्येत्यनेहा मुदा।।**[५५]

डॉ. वासुदेवकृष्णचतुर्वेदस्यविषये कवेः कथनमस्ति–

**श्रीमद्डॉक्टरवासुदेवललितः कृष्णो हि वृन्दावने**
**विद्याधाम समग्रदर्शनविभाविद्योत्यमानो महान्।**
**अध्यक्षः सुरवाग्विभागरुचिरे विद्यालये दार्शने**
**विद्वन्मौलिमणिः क्षितौ विजयते मध्ये चतुर्वेदिनाम्।।**[५६]

डॉ. कपिलदेवद्विवेदिनो विषये कवेरुक्तिरस्ति–

**स्थाने ज्ञानपुरे निदेशकवरो विश्वार्चिते भारती-**
**संस्थाने कृतिनां गणस्तुतयशा वक्ता महाँल्लेखकः।**
**आचार्यः कपिलद्विवेदिसुजनः शास्त्राब्धिपारं गतो**
**ग्रन्थश्रेष्ठविधायकः सुकुशलो भूमण्डले विश्रुतः।।**[५७]

आचार्यश्रीशुक्लैः बहूनां संस्कृतविदुषामुल्लेखो न व्यधायि। तत्र कारणं ते निर्दिशन्ति–

**अस्माकं भारतेऽस्मिन् प्रचुरसुरवचोमेधाविसुजनाः**
**तेषां नो सम्भवं वर्णनमिह लघुकृत्यां सर्वकृतिनाम्।**
**स्वल्पास्तस्माद् गृहीताः परमविवशताहेतोर्बुधजनाः**
**क्षंस्यन्ते पण्डिताः संस्कृतगिरि निरताः स्वान्तोज्ज्वलतराः।।**[५८]

इत्थं 'नवभारतपुराणे' कविनाचार्यशुक्लेन प्रसङ्गानुसारं प्रायः स्वसमकालीनानां प्रौढ़ानां यूनां च संस्कृतविदुषामुल्लेखेन स्वलेखनी धन्यतां प्रापिता। यतो हि विद्वान् सर्वत्र पूज्यते। कवेर्विनम्रता कीदृशीति ज्ञातुं वयं जानीमो यत्तेन स्वविषये किमपि पद्यं न निर्मितम्। गुरुभ्यो नमः।

२८.११.२०१९
(रमाकान्त शुक्लः)
आर-६, वाणी-विहार, नयी दिल्ली-११००५९
मेल : sarvashukla@gmail.com

## सन्दर्भाः

१. नवभारतपुराणम् ७/१
२. तदेव ७/२-३
३. तदेव ७/४
४. तदेव ७/५
५. तदेव ७/६
६. तदेव ७/७
७. तदेव ७/८
८. तदेव ७/९
९. तदेव ७/१०-११
१०. तदेव ७/१२
११. तदेव ७/१३
१२. तदेव ७/१४
१३. तदेव ७/१५
१४. तदेव ७/१६
१५. तदेव ७/२०
१६. तदेव ७/२१
१७. तदेव ७/२२
१८. तदेव ७/२३

१९. तदेव ७/२४
२०. तदेव ७/२५
२१. तदेव ७/२६
२२. तदेव ७/२७
२३. तदेव ७/२८
२४. तदेव ७/३०
२५. तदेव ७/३१
२६. तदेव ७/३३
२७. तदेव ७/३४
२८. तदेव ७/३५
२९. तदेव ७/३७
३०. तदेव ७/४२
३१. तदेव ७/४३
३२. तदेव ७/४४
३३. तदेव ७/४६
३४. तदेव ७/४८
३५. तदेव ७/४९
३६. तदेव ७/५०
३७. तदेव ७/५१
३८. तदेव ७/५३
३९. तदेव ७/५४
४०. तदेव ७/५५
४१. तदेव ७/५७
४२. तदेव ७/५९
४३. तदेव ७/६०
४४. तदेव ७/६१
४५. तदेव ७/६२
४६. तदेव ७/६८
४७. तदेव ७/६९-७३
४८. तदेव ७/७४
४९. तदेव ७/७५
५०. तदेव ७/७६
५१. तदेव ७/८४
५२. तदेव ७/९१
५३. तदेव ७/११४
५४. तदेव ७/११२
५५. तदेव ७/११५
५६. तदेव ७/९३
५७. तदेव ७/९५
५८. तदेव ७/११३



All India Oriental Conference - 50th Session Nagpur

AIOC Centenary Year Celebration

Organised by

Kavikulaguru Kalidas Sanskrit University

Ramtek, Dist. Nagpur (M.S.)

Certificate

This is to certify that Prof./Dr./Shri/Smt./Ku. Dr. Ramakant Shukla

of ______ has attended the

50th Session of All India Oriental Conference organised by Kavikulaguru Kalidas Sanskrit University, Ramtek, Nagpur during 10 - 12 Jan. 2020 and presented the paper titled आचार्य श्री रमेशचन्द्र - शुक्ल प्रणीते 'नवभारतपुराणे' संस्कृतविदुषामुल्लेखः

in the Section - ______

Sectional President

50th Session

All India Oriental Conference

Local Secretary

50th Session

All India Oriental Conference

## देववाणी-परिषदा प्रकाशिताः केचन ग्रन्थाः

| ग्रन्थांकः | ग्रन्थः लेखकः | मूल्यम् |
|---|---|---|
| ६४. | लक्ष्मीशतकम् (डा० वरदाचार्य कण्णन्) | रु० ६०.०० |
| ७५. | भाति मे भारतम् (काव्यम्) (डा० रमाकान्तशुक्लः) छात्र संस्करण | रु० ३५.०० |
| ११०. | श्रीधर भास्कर वर्णेकर-कृत श्रीशिवराज्योदयम् महाकाव्य का साहित्यशास्त्रीय अध्ययन (डा० अभिनव शुक्ल) | रु० ८००.०० |
| ११२. | आयुर्वेदशास्त्रस्य परिप्रेक्ष्ये सत्याग्रहनीतिकाव्यस्यानुशीलनम् (डा० चन्द्रमौलि शुक्लः) | रु० ३५०.०० |
| ११३. | सर्वशुक्लोत्तरा (कवितासंग्रहः) (डा० रमाकान्तशुक्लः) | रु० १५००.०० |
| ११४. | भाति मे भारतम् (गुजरातीभाषानुवादः) (डा० मनसुख पी.पटोलिया) | रु० १००.०० |
| ११८. | 'श्रीस्वामिविवेकानन्दचरितम्' और 'विश्वभानुः'(डा. रवीन्द्र नागर) | रु० ५००.०० |
| ११९. | आशाद्विशती (डा० रमाकान्तशुक्लः) | रु० २००.०० |
| १२०. | सर्वशुक्लोत्तराः हिन्दी में (श्रीमती रमा शुक्ला) | रु० ५००.०० |
| १२१. | मम जननी (डा० रमाकान्त शुक्लः) | रु० २००.०० |
| १२२. | समष्टिः (राधावल्लभत्रिपाठी) | रु० २००.०० |
| १२३. | आर्यार्णवः (आचार्य शिवदत्तचतुर्वेदी) | रु० १०००.०० |
| १२७. | श्रीहीरकप्राभृतम् (प्रथमखण्डः) (प्रो.इच्छारामद्विवेदी) | रु० १०००.०० |
| १२८. | श्रीहीरकप्राभृतम् (द्वितीयखण्डः) (प्रो.इच्छारामद्विवेदी) | रु० १०००.०० |
| १२९. | श्रीहीरकप्राभृतम् (तृतीयखण्डः) (प्रो.इच्छारामद्विवेदी) | रु० ६००.०० |
| १३०. | श्रीहीरकप्राभृतम् (चतुर्थखण्डः)(प्रो.इच्छारामद्विवेदी) | रु० २०००.०० |
| १३२. | योग विभूति विमर्श (डॉ.अभिनव शुक्ल) | रू० २००.०० |
| १३३. | श्रीशिवराज्योदय-सहजबोध( डॉ.अभिनव शुक्ल) | रू० २५०.०० |
| १३४. | आद्योन्मेषः(डा. ऋषिराजपाठकः) | रु० २५०.०० |
| १३५. | चन्द्रिका (काव्यसंकलनम्) (जि.एस.श्रीनिवासमूर्तिः) | रु० २००.०० |
| १३६. | नवयौवनदिग्दर्शनम् ( नौ जवानः एक बानगी ) (पण्डित विष्णुकान्तशुक्लः) | रु० ३००.०० |
| १३९. | अर्वाचीनसंस्कृतसर्वस्वम्(डा० अभिनवशुक्लः) | रु० १०००.०० |
| १४०. | कान्तकाव्याञ्जलिः(डा० रमाकान्तशुक्लः) | रु० १०००.०० |
| १४२. | श्रीमदूधमसिंहचरितम्(डा० ऋषिराजपाठकः) | रु० ४००.०० |
| १४३. | प्राच्यविद्याशताब्दीयम्(डा० रमाकान्तशुक्लः) | रु० १५००.०० |
| १४४. | 'श्रीशिसावराज्योदय'-सहजबोधः(डा० अभिनवशुक्लः) | रु० ४००.०० |

**Our Bank Details:**

**DEVAVANI PARISHAD, DELHI**
**A/c No.:** 10483627083
**Bank:** State Bank of India
**Branch:** Uttam Nagar, New Delhi
**Branch Code :** 01679
**IFSC Code:** SBIN0001679

**देववाणी-परिषद्, दिल्ली**
आर-६ वाणी विहारः,
नई दिल्ली-११००५९ फोन- २८५६१८४६
**DEVAVANI PARISHAD , DELHI**
R-6, Vani Vihar, New Delhi - 110059.
Phone: +91 9560532392, 011 28561846
devavanipd@gmail.com

